स्माकमक्षिप्तशमनयाऽलङ्कृतः स्यात् । सहानया वयं सस्नेहाः समुन्मूलयेम शाक्तधर्ममनर्थकरम् । मन्ये नारीभिरेव करणीयं प्रसरणं प्रवर्तितस्य धर्मस्याभिनवस्येति समीहते भगवान् बुद्धः । अत एव भिक्षुगणादपि परिव्राजिकागणो गरीयान् विहाराश्रमेऽस्माकम् (एवमाभाषमाणया मृणालिन्या सदृष्टिक्षेपमीक्षितः शमधनः) गृहीतदीक्षेषा महाभागा सुतरां प्रीणयेद् भगवतीमवलोकिताम् । अपि नामेयं नः कृतार्थयेत् ?—

'अथ किम्' । प्रत्युत्तरपराङ्मुखीमालोक्य नीलां नंदैव मृणालिनीं प्रत्यवोचत्–' अर्हतीयं साकल्येनाश्रमविहारवासं वः । त्वादृशीमेव धारयतीयं त्यागवृत्तिम् । किन्तु—

साशङ्कं प्रतिवचनं नंदाया आलक्ष्य तथाविधमसुखोत्तरं प्रश्नं परिपृच्छन्तीं मृणालिनीमपराधिनीमेव मन्यमानेन शमधनेन सहासं निषेधधियाऽभाणि–"मातः यत्र कुत्रापि शोभनं समीक्ष्य मानुषमञ्जसैव शाकुनिकायते नो मृणा । मन्ये लुब्धकानामेव जातावासीदियं निक्षेप्तुं निर्मिता पूर्वं वेधसेति " ।

नंदा–यद्येवं तदार्योऽप्यनयैव निरुद्धः स्यात् स्वजाले । सुनिपुणेयं परीक्षणे मानुषाणाम् ।

यदृच्छयैतदासीत् प्रोक्तं नंदया । परं लीलया प्रोक्तमपीदं वाक्यमस्पृशत् हृदयमर्म तयोः । यत एतदाकर्ण्य तावुभावपि परस्परमुखमीक्षमाणौ विहस्य मनागिव व्रीडां जग्मतुः ।

कथमप्यसमर्थितेन विधिना तथात्वमुपगते वाक्प्रस्तावे नीला मौनमत्याक्षीत् । एवं युवयुवत्योरन्योन्यसहवाससंश्रयेण क्रियमाणे धर्मकार्ये धर्मादपि गरीयान् संभवोऽधर्मस्येति तद् युवयुवतियुगल–समीक्षणेनोत्प्रेक्षमाणा नीलाऽऽलपत् "मातः,स्वीकृतबुद्धधर्माऽहमेतदाश्रमविहारवासमप्यङ्गीकुर्याम् । परं विधिवैशस्यादस्या मृणालिन्या इव क्वास्ति मे सहचरः ? । आदावा सादयितव्यस्तथाविधः सहचरस्ततः

प्रवेष्टव्य एतेषां संघः । सकृत् समर्पितं मे धर्माचारे फलं सहवासस्य सहचरेण । स्थापिताऽहं सहचरेण मे पितृवने । न मनागपि मे रोचते युवयुवत्योराश्रमे विहारे वा सहवासः । युवयुवतिसहवासाद्धि सह धर्मेणाधर्मस्यापि संचयो न परिहार्यः " इति ।

मुक्तमौनयाऽपि नीलया यदभाणि तेन केवलं तदीयमन्तर्गतं दुःखमेवाविष्कृतम् । अपि च स्वयमाहूतस्यातिथिविशेषस्य कार्यं धार्मिकं तन्मनःखेदकरैर्वचोभिर्विदूषितं तद्विज्ञाय नंदया स्वयमेवैत्रं संलापः संहृतः । साऽवादीत्—आर्ये मृणालिनि, मुग्धाया अस्या भाषणेन न मनागप्यात्मा खेदयितव्यः । केनापि सविशेषेण दुःखाग्निना संतप्तहृदयाया अस्या आननान्निर्गता वाक् पुरोगंत श्रोतारं सर्वदा दहत्येव । शाक्तधर्मविद्वेषिण्यपीयं मादृशी धर्मान्तरस्वीकरणपराङ्मुख्येव । अमुकनाम्नो धर्मस्याहमनुयायिनीति कथनाद्विनाऽपि मानुषो मोक्षमाप्तुं क्षम एव । शाक्तः, बौद्धः, सनातनी वेति शुद्धमनसः सर्वं सममेव । अस्यां मे गोशालायामेका श्वेताऽन्या च कृष्णेति द्वे धेनू वर्तेते । समान एव प्रेमा म उभयोः । अपि च ते अपि मयि समानस्वादमेव वितरतः पयो मधुरम् ।

नंदाया एतेन वाक्येनावसितप्रायोऽभूत् तेषामालापः । अथ सन्ध्यायां प्रसरत् तमः समालोक्य शमधनो मृणालिनीमधिकृत्योवाच—" मृणालिनि, चिरमावाभ्यामत्र स्थितम् । तत् किं त्वन्मार्गदत्तदृष्टिः स्याद् अवलोकिता मातेति ते कथनीयमेव ? " इति भाषमाण एव स उत्थाय चलितः ।

" अहो अतिक्रान्ता वेला । नंदया सह समालपन्त्यहं न कर्हिचिदवैम्यतिक्रमं कालस्य । परमद्यतनोऽयमतिक्रमः कालस्य नाफलः । भूयोऽप्यहमागमिष्यामीह सह नीलया सख्यं दृढतरतामुपनेतुम् " इत्युक्त्वा समुत्थाय सत्वरगतिर्मृणालिनीसमीपमुपगता शमधनस्य पाणिं

पाणिनाऽवलम्ब्य द्वावपि तौ पूर्ववदन्योन्यं किमपि निःशब्दं कूजन्तावाश्रमविहारं प्रति प्रातिष्ठताम्।

नीला नंदामवादीत्—"मातः, पश्य भूयोऽप्यवलंबितकरं समारब्धमाभ्यां संचरणम्। एतद्दैवतयोः पारमार्थिकं धर्मकार्यम्" इति।

**नंदा**—शान्तम्। बाल्यादारभ्य सह पांसुक्रीडितौ सहसंवर्धितावेतावलंबितकरौ भ्रमतः। तथाप्येताभ्यामपि न किं त्वयेव गृहं परित्यक्तम्। त्यागिनं भोगिनं वा वीक्ष्यमानवं तेनैव वत्सया वेदितव्यं तस्य शीलम्। भवतु। अतिक्रान्ताऽर्चनवेला देवतानाम्। तदधुना देवता नीराजयामि।

**इति द्वितीयः परिच्छेदः**



## तृतीयः परिच्छेदः ।

**क ईप्सितार्थस्थिरनिश्चयं मनः**
**पयश्च निम्नाभिमुखं प्रतीपयेत् ॥** —कालिदासः

शमधनोऽध्वानमुल्लङ्घयन्नवोचत्—मृणालिनि, सर्वैरपि रुद्ध-गतिभिरेव स्थेयं ते पुरः । ननु धर्मप्रसारकार्येऽपि । न शोभतेऽतिक्रान्तमर्यादः समुत्साहः ।

आविष्कृतविस्मया मृणालिन्यभाणीत्—किमतिक्रान्तमर्यादं मयाऽऽचरितम् । विषण्णाननाऽलक्ष्यत सा नवा बालिका निरुत्साहा शाक्तपथद्वेषिणी । उपदिष्टमतोऽस्यै मया धर्मान्तरस्वीकरणम् । न वेद्मि कथमेवं कुर्वाणां मामपराधिनीं गणयसि । भवतोऽपि भिक्षुदीक्षास्वीकरणे मदाग्रह एव निदानम् । सर्वदा समुद्घाटिताननैर्भाव्यं धर्मप्रचारकैः । नान्यथा भवेयुस्ते सिद्धिमन्तः ।

शमधनो विहस्योवाच—भाव्यं समुद्घटिताननैर्धर्मप्रचारकैः । परं यथा स्वाननर्निर्गता न वैफल्यमियाद् वाग् यथा च नाप्नुयाद् आनने बाह्यः कृमिगणः संप्रवेशं तथा तैरवधानपरैरपि भाव्यमेव ।

कथमङ्गीकृतभिक्षुदीक्षौ स्वेच्छयैव जातौ मृणालिनीशमधनौ बौद्धगणगुम्फिताविति कुतूहलिनां वाचकानां कौतुकापनिनीषया तद्वृत्तं वर्णयामः—

आसीत् पुरं हेमकुटीरं नाम । एतदेव निवासस्थलमुभयोरपि मृणालिनीशमधनयोः । अन्वयागतेन विभवेनोभयोरपि पितरावनल्पधनौ । गङ्गाप्रवाहवहत्प्रवहणव्यवहरणतत्परोऽभवत् पिता मृणालिन्याः कृषिकुसीदादिव्यवहाररञ्जितमनाश्च जनयिता शमधनस्य । प्राग् वर्ष-

त्रयात् विनिश्चितः पितृभ्यां परिणय एतयोः । परमननुकूलतां ग्रहाणामुत्प्रेक्षमाणेन गुरुणा मृणालिन्या मासचतुष्टयं यावद् विलंबं प्रापिता तिथिर्विवाहस्य । नैतदनुतुषदुभयोरपि तयोः । परमुपागमतां विषादमुभौ । अन्वयागतस्नेहतया समुपारूढ-परिचयावुभावपि तौ परस्परबद्धभावौ परिणयदिनानुपालनपरौ समुत्कण्ठितमानसावास्ताम् । कार्तान्तिकनिर्मितेनामुनाऽन्तरायेण द्वयो-रपि तयोः सहस्रधा दीर्णं मनोरथैश्चिरकृतैः । किन्तु कुलीनतया न पारितं ताभ्यामतिक्रमितुं शासनं तातस्य । एवमतिदुःसहमवस्थान्तरमु-पगतेऽस्मिन् व्यतिकरे केनाप्यतर्कितेन विधिना भूयो वर्षचतुष्टयं व्याक्षिप्तः स परिणयोऽन्ततोऽविनिश्चितसंभवतया संततमदीदहन्मानसं पित्रोः ।

एवं व्याक्षिप्तमुहूर्तादेन परिणये बौद्धभिक्षूणामेको महान् गणः परिभ्रमन् धर्मसाधनाय हेमकुटीरं पुरमायात् । अदृष्टपूर्वतयै-तादृशस्य धार्मिकप्रवरपूर्णस्य नरनारीणां गणस्य सर्वेऽपि सकुतूहलाः समजायन्त हेमकुटीरनिवासिनः पौराः । आवसद् भिक्षुगणो बहिर्न-गराद् रम्यमाम्रपादपवनमेकम् । आरभन्त नागराः प्रतिदिनं प्रातः सायमपि च गन्तुं तस्य दर्शनाय । अवर्धत दिने दिने दिदृक्षूणां शिशु-नारीप्रचुराणां गणो नागराणाम् । सर्वेऽपि तद्दर्शनप्रीतमनसो-विमोहितहृदया अलक्ष्यन्त सश्लाघं निवर्तमानाः ।

पीतं परिधानं, सविनयं वचनं, धर्मतत्त्वानामुदाराणां व्याख्यानं, परित्यक्तलोभमालपनं, विशेषेण चास्मास्वदृश्यमानं नरनार्योरैकमत्ये-नान्योन्यतुल्यभावेन व्यवहरणं इत्येतानि चान्यानि चैतेषामदृष्टपूर्वाणि भिक्षूणां लक्षणानि न चिरादाचकृषुर्नागराणां मानसानि । तथा च न केवलमेते नासन्नपकारिणः परमभूवन्नतितरां परोपकारिणः । करकलितकमण्डलून् कान्तिमतः स्त्रीपुरुषाणां गणान् दूरी-भूतस्पृहान् निरहंकारान् मोक्षमार्गानुधाविनो विलोक्य विषया

सक्तचेतसः कस्य ग्रामवासिनो मानसेन न भूयते समुपारूढगौरवेण । अत्राप्येवमेव कथमपि संवृत्तम् । अन्योऽप्यत्रासीज्जनानामयमतितरां विस्मयावहो व्यतिकरो यदसौ महानपि भिक्षुगणोऽवलोकितया नाम कयापि कान्तिमत्या यतिवेषधारिण्या मनोहारिण्या सद्यो मुक्तयौवनया विगतनाथया वनितया सर्वतो नियन्त्रितोऽवर्तत। भिक्षुसंघस्थिता आसन्नवार्धकाः पुरुषा अपि शिष्या इव भुजिष्या इव वा तदाज्ञानुवर्तिनः सर्वे तामुपासत। श्रुतिपथमुपगतेन भगवतो बुद्धस्य यशसा समाक्रान्तपूर्वाण्यासन्नेव नागराणामत्रत्यानां मानसानि। परमनेन बुद्धप्रमाणपूर्वं धर्मतत्त्वान्युपदिशतः पीतवाससो भिक्षुसंघस्य दर्शनेन धर्मदोषापनिनीषोरीश्वरस्यैव शासनात् प्रवर्तितनवमन्वन्तरं भुवस्तलमधुनेति मेनिरे जना नागराः।

अणुरूपमपि कारणं मोदस्य प्रबोधस्य वा विषादविह्वलीभूतस्य मनसो धारयति गरिमाणं हृदय विषण्णस्य प्राणिनः। विषण्णमानसौ मृणालिनीशमधनावतोऽतितरामुपकृतौ दर्शनेनैतेन भिक्षुसंघस्य। एकदा सायं प्रतिदिनप्रोच्यमानस्यावलोकिताप्रवचनस्य शुश्रूषयाऽऽश्रवनं स्वेच्छयैव पृथक् पृथगुपस्थितौ विधिवशात् परस्परसंगतावजायेताम्। अवसाने प्रवचनस्य मृणालिनीमुपेत्य शमधनोऽभ्यधात्—मृणालिनि, अतीतकालमवसितमद्य प्रवचम्। वर्धतेऽनुक्षणं बहिरपि तमो बहुलम्। तत् सहचरीभूय प्रापयाम्यहं भवतीं स्वभवनम्। 'तथा' इत्याभाष्य मृणालिनी सहचरीकृतेन सहैव तेन पन्थानमतिक्रमितुमारेभे। परं चिरेणाप्यकृतभाषणां तामालोक्य शमधनेनाभाणि—" मृणे, भिक्षुसंघाश्रमान्निवर्तमानया त्वयाऽद्य, मन्ये, नानीतं मनः सहात्मनेति। भगवत्या अवलोकिताया हस्ते न्यासीकृत्य तत् त्वमद्य निवृत्ताऽसि। अत एव शब्दमात्रेणापि न मां प्रीणयसि " इति।

एतदाकर्ण्य दीर्घं निःश्वस्य "कदाचित् तथापि स्यात्" इत्याभाष्य यथापूर्वमवनामितवदना भूयोऽपि पथा प्रयातुमारेभे।

कंचित् कालं तूष्णीं स्थितः शमधनः पुनरवादीत्—सत्यमेव, मृणे, त्वयाऽद्य पृष्ठतो निहितं ते मनः। श्व एवाश्रमं प्राप्य तत् त्वया प्राप्येत। परं प्राक् प्राप्तेस्तस्य किमेवं सह स्वजनेनापि त्वं मूकतामेवाश्रयिष्यसि?।

'स्वजन' इति निर्देशेनैव किमपि स्मरन्ती मृणालिनी क्षणं ध्यात्वा प्रोवाच—शमधन, विवाहविलम्बमावयोरधिकृत्यासीन्मया कुपितमुपरि तातस्य। परमद्यतनादवलोकिताप्रवचनश्रवणादारभ्य मया तर्क्यते यत् स्वात्मैवार्हत्यत्र कोपं न तातः इति।

शमधनोऽब्रवीत्—तत् सर्वथा संप्रति प्रत्यानीतचित्ता भवती।

"बाढम्। परं चेतसा सदैव प्रत्यानीतप्रवचनाऽपि।"

"कः पिण्डितोऽर्थोऽद्यतनस्य प्रवचनस्य?"

"वासनैव दुःखमूलमिह जगति। वासनानिर्मूलनमेव सुखमन्तिमम्। त्वया सह कृतपरिणयाऽहं सुखिनी भवेयमिति यो मया प्रदत्तो हृदयेऽवकाशो वासनायै स एव मे प्रमादः"।

"परमावयोः परिणयवासनायै न केवलमावाभ्यामेव दत्तोऽवकाशः किन्तु तव ममापि च गुरुणापि। अन्यच्च ग्रहाणां प्रातिकूल्यमुत्प्रेक्षमाणेन यत् तव तातेन दुःखाद् अनुष्ठितं व्याक्षेपणं परिणयस्य तदपि न किमावयोः सुखाय कल्याणाय च?"।

"अभिन्नमावयोर्गुरूणां च निदानं दुःखस्येत्यत्र मे नानैकमत्यम्। परं दूरीकरणाय दुःखस्यात्मनो मत्परिणयस्पृहैव त्वया हातव्येत्यहमद्य स्पृहयामि गृहगता कथयितुं मे ताताय।"

एतदाकर्ण्य शिरस्यशनिनेवाहतः शमधनः क्षणं स्तंभित इव भूत्वाऽवदत्—"मृणालिनि, न सम्यक् गृहीतोऽर्थस्त्वयाऽद्यतनस्य

प्रवचनस्य । सैव वासना दुःखमूला यामासक्तिरावसति । अत आसक्त्यदूषितां वासनां न कोऽप्यर्हत्याकलयितुं दुःखमूलाम् । स्वाभाविकतया सा क्षम्यैव । तस्यामपि परित्यक्तायामयं संसारः शून्यतामियादित्यपि न किमन्ततो विशदीकृतं मतमात्मनो भगवत्या ? "

"शमधन, न क्षमाऽहमतिशयितुं त्वां युक्तिवादेन । यथा रूपादिषु तथा मतिमत्त्वेऽपि मामसंशयं त्वमतिशेषे । तथाप्येतावदेव वाच्यं त्वया याथार्थ्येन यद् येयमावाभ्यामुभाभ्यामप्यनुभूता मनोव्यथा मासचतुष्टयव्याक्षेपेण परिणयस्य तत्र किमासीद् निदानमन्यद् आसक्तेः । किमस्मदीया सा सुखस्पृहा पानाशनादिवदेव केवला स्वाभाविकी ? । उतान्यादृशी ?"

" यदि वासनाक्षय एव निदानं दुःखनिर्मूलनस्य तदद्य यावदावाभ्यां स समाचरित एव। न किमावाभ्यां स्थितं निर्णये गुरूणाम् ?। यदि नौ वासना स्यादनिवार्या समासक्तिरूपा तदतिक्रम्य पितृशासनमन्य एवाङ्गीकृतः स्यादावाभ्यां पन्थाः। अवलम्बनीया वासना प्राणिभिः । परं भाव्यं तया सनियन्त्रणया । अभिन्नो वासनाक्षयो वासना नियन्त्रणात् आवयोरयं संयमो न चिरात् स्यात् सफलः परिणयेन । 'अहो शालीनता पुत्रयोः' इति पित्रोः असंशयं प्रशंसापात्रमपि भवेवावाम् " ।

" पश्याद्यापि भाविमोदस्पृहयैवावेष्टितं वर्तते चेतः । सैव च स्पृहा निदानमनुभूतपूर्वस्यावयोर्दुःखस्य । सुखाशासमाचरितोऽयं वासनाक्षयो नैव वासनाक्षयो यथार्थः " । " तत् किं मन्यसे मृणालिनि, मया शाश्वतिकमेव नैराश्यमवलम्बनीयं परिणय आवयोः । एवं च कृते प्राप्येत मया मोदो यथार्थ इति ? "।

" न केवलं हेया त्वया वासना परिणयस्य परं सर्वस्यैव वस्तुजातस्य । परित्यज्य प्रोत्कटामात्मीयां वासनां सुखासुखसंमोदरहिता

वा मध्यमानुभूयते नैररवस्था तदेव साध्यं देहिनाम् । भगवतो-बुद्धस्यानुज्ञयैतदेवानुदिनमुपदिश्यते भगवत्याऽवलोकितया । अन्योन्य-प्रेम्णाऽऽवयोः किमिति परिणय एव पर्यवसितव्यम् । विवाहात् पुत्र-स्पृहा । ततः पुत्रसुखस्पृहा । एवमनवसानेयं वासना जनानाम् । प्रेक्षतां भवान् चरितं भगवतो बुद्धस्यैव । किमसौ परिणयति सर्वास्ता वनिता यासु स स्निह्यति ? । किं बहुना यथा भार्यया सह स सानन्दोऽवर्तत या च प्राणेभ्योऽप्यस्य प्रेयसी सा न किमनेन स्वयमेव परित्यक्ता ? ”

“ परं न किमतत्तस्य चेष्टितं स्थापितं दोषपक्षे जनेन निखिलेन ? । किमिव वराक्या तयाऽस्य तथाविधमासीदपराद्धं यत्कृतेऽनेनैतादृशं दण्ड-मनुभाविता । मृणालिनि, नीतिमाचरत्ताऽपि जनेन देयमाद्यं पदं न्यायधियै ” ।

“अवितथं ते वचनं, शमधन । परं न त्वया व्याख्यातो न्यायशब्दः । अनुरागिण्या भार्यया सह कंचित् कालं सानन्दं व्यवहरता भगवता बुद्धेन स्थापिता सा मातृपदे पुत्रसंपादनेन । ततः परमपि यावदायुः यदि स भार्यानुरक्तचेता विस्मृतविश्वोऽवर्तिष्यत ततः कथं तन्न्याय्यम-भविष्यत् । ऋणप्रत्यर्पणं देयसमर्पणमेव वा न्यायः । ऋणानुबंधपरि-पालनमेव न्यायो यथार्थः । यथा स ऋणी भार्यया तथा जगतापि । यथा तेनांशतोऽनुष्ठितमृणशोधनं भार्यायास्तथा जगतोऽपि । किं नैति कर्तव्यतामपरं तस्य कार्यजातम् ? ” ।

“ एवमेतत् । सर्वस्यापि क्रमेणाक्रमणमेव समुचितम् । परं यौवनप्रान्ते वर्तमानायास्ते चेतसः कथमियं वैराग्यधीः स्यादुचिता । अतिशेषे त्वं बुद्धभार्यां विचारेण । अत ऊर्ध्वं विवाहात् संभवति विश्व-कर्तव्यदीक्षास्वीकरणं त्वयि यथाकालम् । अहमपि च यद्यपि न

बुद्ध इव कर्तव्यकर्कशस्तथापि न त्वद्धृदयबाधकोऽपि । अपि च भगवत्यवलोकिताऽपि पूर्वं बुद्धवदङ्गीकृतविवाहदीक्षैवासीत् । तथैवावामपि पूर्वं परिणीय पश्चाद् यथाकालमङ्गीकृतविश्वकर्तव्यदीक्षौ धर्मसाधनाय निर्गच्छेव "।

शमधनेनैवं युक्तिवादवागुरागृहीता सा पूर्वमात्मानमुन्मोचयितुमजानती तूष्णीमेव पदानि प्रक्षिपन्ती कंचित् कालमूरीकृतमूकभावा पुरो वव्राज। 'जितं मया' इति धिया शमधनः सुतरां तुतोष। परं निम्नाभिमुखं निर्झरोदकं मृत्तिकाचयनिरुद्धतया कंचित् कालं कुण्ठितगतिप्रसरमपि न चिरान् मृत्तिकाचयमुल्लङ्घ्य भूयः स्वं पन्थानमवलम्बते । एवमेवानुष्ठितं मृणालिन्या ।

साऽब्रवीत्—"शमधन, क्रमेणैव कार्योऽखिलः कर्तव्यकलापो मनुजेनेति यदुच्यते त्वया तन्न संमतं मे । अकृतविलम्बमेव कार्यं कर्तव्यमात्मनो मनुजेनेति नीतिवचनम् । 'श्वः कार्यमद्य कुर्वीत' इत्यत्युक्तिर्नीतिविदाम् । उत्प्लवनाक्षमैरेवाक्रमणीयाऽधिरोहिणी क्रमेण । चपलतनवस्तु मानवा विनैवाश्रयमधिरोहिण्या न किमासादयन्ति परभागमुत्प्लवनेनैव । धर्मसाधनस्य सुखमुच्चैः प्रदेशमारुरुक्षूणां समुल्लङ्घनक्षमाणामपि जनाना किमिति रोद्धव्योऽध्वा प्रत्यूहकारिण्याऽधिरोहिण्या। काममधिरोहिणीमवलम्ब्य प्रोच्चैर्नभस्तलमासादयन्ति पतत्रिणः । पक्षसामर्थ्येनैव न किं प्राप्यतेऽभीष्टमुपरितनं स्थलमेतैः ? "।

"चक्षुरगोचराऽपि वर्तत एवाधिरोहिणी पक्षिणामध्वनि नभःस्थले । क्रमेणैवाक्रम्यते वियत् गरुत्मता । क्रमपरित्यागः सर्वेषामेवानुशयाय । एकं द्वौ वा क्रमावुल्लङ्घयितुं क्षमस्यापि न शक्यमखिलपदलंघनं मानवस्य । आत्मनश्चपलतायाः सामर्थ्यस्य वा प्रत्ययेन ये विहाय क्रममुत्पतन्ति ते स्खलितपदा अन्ततो भग्नदशनचरणा जायन्ते । अतिमोहकारिणीयं वासना धर्मसाधनस्य । क्रमश एवाराधितैषा बहुफला ।

अन्यथा बाल्यं, कौमार्यं, यौवनं, वार्धक्यं चेत्यादयो न स्युर्विनिर्मिता मानवेष्ववस्था ईश्वरेण । किमुपदिशत्यस्मानाश्रमव्यवस्था सनातन्यस्मदीया? । अवसान एव कौमार्यस्य सहसा निर्विचारमङ्गीकृततापसव्रतैरनेकैर्भग्नोद्यमैरनायासेनैव परेषामुपहासास्पदतामस्ति स्वात्मा नीतः" ।

भूयः कुण्ठितवागभून्मृणालिनी । परं प्रोत्कटया ध्येयवासनयाऽन्यमेव युक्तिवादमासीत् सा शिक्षिता । साऽवादीत्— "शमधन, न वितथं ते वचः । निजसामर्थ्यप्रत्ययात् उत्पत्य प्रस्खलद्भिः प्राप्य समतोलनक्षमं सखायं शक्यमासादनं ध्येयस्य । तदेवं कृते कः प्रत्यूहः ?" ।

ज्ञातो मृणालिन्या आशयः शमधनेन । तथापि तन्मुखेनैव स्फुटतरतां नीते वाच्यविषये कदाचिन्मन्दतां यास्यति ध्येयवादो मृणालिन्या इति मन्यमानः शमधनोऽप्राक्षीत्— "स्त्रीकृत्य परसाहाय्यमुत्पतिष्णुभिः क्रमातिक्रमणस्पृहैव न हृदये स्थापनीया । अन्यथा सहैवात्मना ते सखायमपि साहाय्यकरं वृथा दन्तभग्नतां प्रापयेयुः । परं मृणालिनि, अलमधुनैतादृशेनास्फुटालापेन । स्फुटमेव मे कथय । कमिव विक्रमं चिकीर्षति ते चेतः । कश्च धर्मकार्येऽस्मिन् सखा ते साहाय्यकृत्" ।

मृणालिनी विहस्यागदत्— "न त्वया क्रियताम् कोपः, शमधन । त्वयेवाहं मयापि त्वं वृतपूर्व एव साहचर्याय । तत् कथं मां पृच्छसि 'कस्ते साहाय्यकृत्' इति । कथं चिकीर्षितं मे धर्मकार्यं विक्रमशब्देन गर्हयसि । अवलोकिताप्रवचने दत्तकर्णाऽहं सर्वदा त्वामेव मत्समीपगतमज्ञासिषम् । प्रवचनश्रवणेन येऽङ्कुरिता मे चेतसि विचारास्तैरेवाकीर्णं ते मन इत्यासीत्तर्को मदीयः । न मे त्वं दृष्टिपथमुपगतो ह्यः श्रोतृषु । परमद्य त्वां श्रोतृष्वीक्षमाणया मयाऽज्ञायत यत् कर्णचतुष्टयेनैव पीयत उपदेशामृतं भगवत्या अवलोकितायाः इति । तदेहि उभावप्यावां संप्रति विहाय विचारं विवाहस्य, परित्यज्य भवने स्वीये भगवत्याऽवलोकितया दत्तदीक्षौ भिक्षुसंघमेनं प्रवेक्ष्यावः" इति ।

एवमभिदधाना सा सप्रणयं शमधनस्कन्धनिहितपाणिस्तमवादीत्—शमधन, विवाहादूर्ध्वं यदि त्वमेव पूरयिता मे मनोरथानां तर्हि किमिति त्वया ते प्रागपि परिणयान्न पूरणीयाः। बलवत् स्पृहयति मे मनो भिक्षुसंघप्रवेशाय। नाहं पारयामि वारयितुं बलीयसीं मे स्पृहां धर्मसाधनस्य। कथं भवान् रमेत विना मया गार्हस्थ्ये। तद् भवतु मे मौर्ख्यं, दुराग्रहो विक्रमो विजयः पराजयो वा। सर्वथा त्वमेव तत्र मे शरणम्। त्वं भोक्ता मे श्रेयसः सर्वस्य। त्वं मे परिरक्षिता लज्जायाः। तव साहचर्यमेव मामनुभावयेत् संसारसुखम्। आत्मीयामेव मनोदीपिकां प्रज्वाल्य पथि पर्यटन्त्यन्ये धर्मसाधनाय। आवां तु तत्कृते दीपद्वयं लभेवहि। अपि नाम भवाननुवर्तेत मन्मतम्?।

एवं ब्रुवाणा मृणालिनी समीपतरमेत्य शमधनस्कंधसमर्पितमस्तका तस्थौ। सोऽपि तदा पुलकाङ्कितततनुर्जज्ञे। तच्छ्रवणसमीपसमर्पिताननः स उदगिरत्। "मृणालिनि, सत्यमहं हीनस्त्वं च धन्या" इति। नाधिकं वक्तुं स शक्तोऽभूत्। अन्ततो बाष्पोपरुद्धकण्ठं कथंचिदुल्लङ्घ्य कृततद्धृदयप्रवेशया तयाऽज्ञायि 'सज्जीकृतमनोरथपूरणसंभारं तत्' इति। अचिरादेव प्राप्तौ तौ भवनान्तिकं मृणालिन्याः। अथ तामापृच्छ्य शमधनो निजनिकेतनं जगाम। ततः कांश्चित् दिवसान् उभावपि तौ प्रतिदिनं विना प्रमादमवलोकिताव्याख्यानं श्रुत्वा गृहं प्रतिनिवर्तमानौ व्याख्यानविषयमधिकृत्यैव प्रोचतुः। उभयोरपि चेतसि सम एवासीद् विद्वेष उपरि हिंसाप्रधानस्य शाक्तधर्मस्य। तेन व्याख्याननिष्ट्यूता नवविचारा उभयोरपि तयोः सममेव मोदमजीजनन्। शाक्तधर्मसंशुद्धेरावश्यकतामधिकृत्योभयोरपि तयोरासीदैकमत्यम्। को विभागो बुद्धोपदेशस्य स्वधर्ममुपकुर्यादित्यत्र विषयेऽपि तयोरभून्मतमभिन्नम्।

भावनाप्रधानाऽभवत् प्रकृतिर्मृणालिन्याः । अतो नवमतप्रशंसां शाक्तमतगर्हणां चाचरन्त्यास्तस्या आननादविचारितप्रमाणा एव निरगमन् वाचः सर्वदा शतशः । विवेकी स्थितप्रज्ञश्च शमधनो ग्राह्याग्राह्यतां विचार्यैव वस्तुनो निन्दास्तुतिपराङ्मुखः स्वीकृतमध्यस्थभूमिक एव याथार्थ्यसिद्धान्तान् सततं प्रत्यपादयत् । नवमतगुणैर्मुदितमपि मनस्तस्य नासीदखेदितं दोषैस्तद्गतैः । बहुफलाऽपि धर्मशुद्धिर्न केनाप्युपयोक्तव्याऽऽत्मन एवस्वार्थाय किन्तु सर्वेषामेव शाक्तधर्मानुयायिनां तया साधयितव्यं हितमिति मन्यमानस्य तस्य क्वचित् भिक्षुसंघवर्तिभिर्नरैः किन्तु शाक्तैरेव बहुभिरभवन् मुहुर्बहवो विवादाः । नासौ स्यात् समुत्सुकः स्वीकरणे भिक्षुदीक्षाया यदि मृणालिन्या स सनिर्बन्धं न स्यादनुनीतः । परमयस्कान्तमणिशलाकयेवायो मृणालिनीप्रेम्णा समाकृष्टमतिरयं समृद्धतया धनार्जननिःस्पृहः सह तया भिक्षुसंघप्रवेशं निश्चिकाय ।

आत्मनो वचनगौरवाद् वल्लभेन निश्चितं भिक्षुदीक्षास्वीकरणमिति विज्ञाय दिवमिवारूढमात्मानं मन्यमाना मृणालिनी सुतरां तुतोष । पुरा पितृकृतेन परिणयनिश्चयेन यामनुबभूव मनसि मुदं मृणालिनी ततोऽप्यधिकां दधौ हृदि साद्य परिणयपराङ्मुख्येन स्वकृतेन । गर्भधारणसंभवादप्यधिकतरेण ध्येयधारणप्रभवेन तेजसाऽद्याशोभत मुखं तस्याः । गर्भधारणमिव ध्येयधारणमपि हि स्त्रीणां मनसि जनयत्यननुभूतपूर्वामतिसुखदां परंपरां मनोरथानाम् । उत्साहसंभवेन च तेजसा न कर्हिचिच्छक्यते स्थातुमस्फुटीभूतेन ।

ऊर्ध्वं गर्भधारणात् भाव्यं पुत्रेणैवात्मनो गर्भेणेति कल्पना करोति पदं हृदि योषितः । पुत्रप्राप्तेश्चानंतरं किं किं स स्वयमाचरिष्यति, किं किं मया कार्यं तत्कृते, कानि कान्युद्भवेयुरेताभ्यां सुखानि, कथं चानेन

यास्यत्यात्माकृतार्थतामित्यादीनां कल्पनाकामिनीनिर्मितानांमागामिनां चित्राणामनेके पटा यान्ति सततं गोचरतां चक्षुषोस्तस्याः ।

ध्येयवादितया मृणालिनी न चिरात् चित्रितवती भाविनं चित्रपटं स्वायुषः । न पुनरेवमनुष्ठितं शमधनेन । सर्वथाऽनुभववादी स न कर्हिचिददूषयदात्मनः पाणिं वृथा चित्रपटसंभृतैर्वर्णैर्विविधैः । यद्यत् संपद्येत तत्तदालोक्य पूरयितव्याऽनुभवकन्था स्वीयेत्यासीन्मतं तस्य । मृणालिनीसाहचर्यसंभवादेव भिक्षुदीक्षास्वीकरणमतूतुषत् शमधनम् । 'भावनाप्रकृतिर्मृणालिनी । अतः सत्कार्यकरणप्रवृत्तमप्यसहनं मनस्तदीयं कदाचिदात्मानं नयेत् वृथा लक्ष्यतां परंपराया विपदः । तेन स्वसदृशस्य परीक्ष्यकारिणोऽनुरागिणः सांनिध्यं भवेदुपकारकं तस्याः' इति कल्पनयाऽङ्गीकृतवान् भिक्षुसंघप्रवेशं शमधनः ।

'न प्रथममभ्यन्तरीकरणीयौ पितरौ भिक्षुदीक्षास्वीकरणस्यात्मनः । गृहीतभिक्षुदीक्षौ भिक्षुवेषाववावां तौ विदितसंकल्पौ करिष्यावः' इत्यभूद् विनिश्चितमुभाभ्यां पूर्वम् । तदनुसारेण तावुभावपि मातरमवन्तिकामभ्युपेत्य तां भिक्षुदीक्षां दातुं प्रार्थयेताम् । भिक्षुदीक्षावितरणमासीत् तयाऽऽरब्धपूर्वम् । परमेवं दीप्तिमत् युवयुवतियुगं भिक्षुदीक्षास्वीकरणसमुत्सुकं न तयाऽभूत् कदाचिदिह दृष्टपूर्वम् । अतोऽस्पृशदद्य हृदयं तस्या विस्मयः ।

प्रमोदेन क्षणमात्रं केवलं तन्मुखमीक्षमाणया तयाऽभाणि—वत्सौ, कृतार्थाऽस्मि युष्मद्याचनाश्रवणेन । अपि युवां भ्रातरौ येनैवं सदैव स्वीक्रियते भिक्षुव्रतं युवाभ्याम् ।

'नावां भ्रातरौ' उभाभ्यामपि झटिति प्रत्यभाणि ।

'अपि युवां दंपती ?' अवलोकिता पुनरप्राक्षीत् ।

किमपि प्रत्युत्तरीकर्तुमक्षमावुभावपि रुद्धकण्ठौ क्षणं तूष्णीमास्ताम् । प्रत्युत्पन्नमतिर्मृणालिनी व्रीडारञ्जितकपोलयुगला निरुत्तराऽवर्तत । शमधनो मनाग् विहस्य प्रत्युवाच—मातः, नाद्याप्यावाभ्यां

परिणीतं विधिना लौकिकेन। परं यदि प्रेमधारणैव स्याद् यथार्थो विधिः परिणयस्य तदावां परिणीताविति वाग् यथार्थैव ।

मार्मिकमेतदाकर्ण्य वचः शमधनस्य सहृदययाऽवलोकितया सहासं व्याचख्ये–' वत्स, एकमेवैतद् वाक्यं प्रत्युत्तरीकुर्वता त्वया स्फुटीकृता सूक्ष्मता मतेरात्मनः । सूक्ष्मतैवैवंविधाऽऽवश्यकी विनिर्णेतुं धर्ममधर्मं वा ' । अथ मृणालिनी मुखनिहितदृष्टिस्तामवादीत्–वत्से, प्रत्युत्तरे तूष्णीं भावमुपगतयाऽपि त्वया नात्मा दूषितोऽसत्येन । यस्मिन् कस्मिन्नपि हि कृच्छ्रे भाव्यं वल्लभया वल्लभ एव कृच्छ्रपरिहाराय विश्वस्तचित्तया सर्वदा । भवतु । भवद्विधान् वत्सलमानसानेव-मानुषानवलम्बते कार्यसिद्धिर्भगवतो बुद्धस्य । परं न बहुफलं विना विचारमूरीकृतं भिक्षुव्रतं मानुषाणाम् । यं कमपि प्रवेशयितुं भिक्षु-संघमहमत्र सर्वदा समुद्यतैव । किन्तु न कोऽपि स्वीकरोति भिक्षुव्रत-मविचारेणेत्यत्र विषयेऽपि भाव्यं मया निःशङ्कया । अतोऽद्य गत्वा गृहं श्वोऽत्र समागन्तव्यं येन युवयोर्भिक्षुदीक्षा वितीर्येत । ' एहि भिक्षो ' इत्याहूय मया समर्पितेषु पीतवस्त्रेषु प्राप्तैव भवेद् भिक्षुदीक्षा भवद्भ्याम् । परं वरमादावङ्गीकृतो विचारो न पश्चादनुतापः । अत उपदिश्यत एवं मया न युवयोरवज्ञया इति ।

इत्युक्त्वा स्वासनादुदतिष्ठदवलोकिता तदानीम् । मृणालिनी शमधनश्चापि तस्मिन् दिने समुत्थाय स्व स्व भवनं न्यवर्तेताम् । परं स्थिरतया निश्चयस्य पुनरपि परेद्युराश्रममभ्युपेत्य तावुभावपि यथाविधि भिक्षुदीक्षां स्वीचक्रतुः । पीतं पटं परिधाय पित्रोः पुरः प्राप्तौ तौ यदा नयनगोचरतां गतौ तयोस्तदा कीदृशीमन्वभवदवस्थां हृदय सर्वस्यापि गृहवर्तिनो जनस्येति वर्णयितुमक्षमा वयं वाचकानेव तत्कृते स्वीयां धियं व्यापारयितुमनुनयामः ।

## इति तृतीयः परिच्छेदः ।

# चतुर्थः परिच्छेदः।

( भैरवपुरगतो बौद्धाश्रमः )

अक्षैर्दीव्यति, गायति प्रतिदिनं, चैषोऽङ्गनां ध्यायति
गन्धं जिघ्रति नित्यमेष सुमनःशय्यामसौ सेवते।
ऊढाऽनेन सुगूढमद्य रमणी, स्तेयं करोत्येष धिक्
इत्थं निह्नुवतेऽन्यदूषणपराः स्वं पातकं भिक्षवः ॥१॥

अङ्गीकृतभिक्षुदीक्षौ मृणालिनीशमनाविति विदितपूर्वमेव नो वाचकमहाभागानाम्। परं नाभूदभिन्ना वृत्तिरुभयोः। मृणालिनी सर्वदा सोत्साहा शमधनश्च कर्तव्यदृष्टिः कार्यान्तरनिवृत्तमनाः। अचिरादेव मृणालिनी सर्वविश्रम्भस्थानमभूदवलोकितायाः। स्वयमेवैकैकशः स्वीकृत्याश्रमगतान् व्यापारान् विविधान् अञ्जसा पूर्णतां नयन्तीं तामालोक्य तुष्टमानसयाऽवलोकितया सा प्रधानमन्त्रिपदं प्रापिता। मृणालिनीशासनमभूत् ततः सर्वेषां प्रमाणं व्यवहरणे। सर्वेऽपि सस्पृहं प्रायतन्त कृपापात्रतां नेतुं तस्याः। सततजागरूकतयाऽऽश्रमव्यहारेषु नाल्पेऽपि भिक्षवः प्राभवन्निह्नोतुं स्वल्पमप्युल्लङ्घनं धर्मस्य नियमस्य वाऽऽश्रमगतस्य। न कस्मिन्नपि भिक्षौ भिक्षुयोषिति वा दर्शितवती सा कर्हिचिदअल्पीयसीमपि कृपां क्षमां वा। तेन समुत्पन्ननिर्वेदा बहवस्तां हृदि दिद्विषुर्भिक्षवः।

एतद्विपरीतवृत्तिनाऽभूयत तत्र शमधनेन। विहाय कार्यं स्वीकृतं नाणीयसीमपि पक्षपातितामदर्शयत् स कर्हिचित् कार्यान्तरे। न मृणालिनीव कदाचिदपि स पुरोगामितामभ्यलषदवलोकितायाः। सूक्ष्मतया मतेः सततं तस्य नयनपथमापतन् दोषा नवधर्मस्य व्याजवृत्तिश्च भिक्षूणां बहूनाम्। दयाक्षान्तीत्यादिभिः श्रुतिमधुरैरात्मानमावेष्ट्य नामभिः शिथिली-

कृतधर्मबन्धनान् स्वेच्छाचारिणो दुर्बलान् दुराचारानालोक्य भिक्षूननेकशः स उपाहसत् पुरोऽवलोकितायाः । स्वयं हि सोऽभूत् धीरः क्षात्रवृत्तिः । अतः सूचिकादोरकन्यायेन मृणालिनीप्रेम्णा स्वीकृतभिक्षुदीक्षोऽप्यसौ प्रियापरिपालनादन्यन्न किमपि कार्यमाश्रमेऽङ्गीकृतवान् ।

प्रतिदिनं प्रातः स्वाश्रमस्य पुरो घटिकामात्रमुपविश्यावलोकिता भिक्षुगणानाश्रमकार्याण्याज्ञापयति स्म । विनाऽऽज्ञां न केनाप्यागन्तव्यं पुर इति कमपि भिक्षुभृत्यमग्रतोऽस्थापयत् । एवमेवाश्रमाद् बहिरुपविष्टायास्तस्या दक्षिणे पार्श्वे मृणालिनी वामे च शमधनोऽद्योपविष्ट आसीत् । आचारविचारविहितानामाश्रमवर्तिनामाक्षेपदोषादीनामन्योन्यसूचितानामनुकूलप्रतिकूलानामपनयनमाद्यमवर्तत कार्यं तत्रत्यं प्रतिदिनम् । “ विमुक्तसंसारसुखानां विरागिणां भिक्षूणामाश्रमेऽप्येवंविधानां कलहानां कुतः संभवः ” इति न भाव्यं विस्मयोत्फुल्लनयनेन केनापि मानवेन । यतोऽतितरामासन् दुश्चरा विधिनियमा आश्रमवासिनां भिक्षूणाम् । अतः साकल्येन परिपालनं तेषामवर्तत सुतरामायासकरं बहूनाम् । अपि चैतादृशा आश्रमा अतीवोपकारिणो जनानां कतिपयानाम् । भिक्षुवेषेण प्रभवति मानवो निह्नोतुमात्मनो दोषाननेकान् । विनाऽऽयासं प्राप्यते माहात्म्यं भवन्ति च जनाः सादराः । स्वयमुपसर्पन्ति साधनानि जीविकायाः । किं च संसारिणो नरादपि स्वच्छन्दानुवर्तिषु तमःप्रकृतिषु विरागिष्वेव नरेषु प्रायेण भूयस्यसहिष्णुता पदं निदधाति ।

आसनमधिरूढायामवलोकितायां प्रारभत मृणालिनी न्यायकार्यम् । स्वयमालिखितं दिनक्रमं संदर्श्य मृणालिन्यै भिक्षुभिरेकैकशः प्रथमं प्राप्तानि तन्नामाक्षराणि पत्रेष्वात्मनः । यैरासीत् स्फुटं लिखितमाश्रमनियमभङ्गपातकमात्मीयं ते स्थापिता एकतस्तया पार्श्वभागे । परं यैर्नासील्लिखितं किमपि त एवं तया सर्वेऽप्यदूष्यन्त शब्दैः—“बाढमस्त्वेतद्

चेतसि सर्वेषां यन्न कोऽप्यलेखनेनापनयेद् दोषान् स्वकृतान् । अल्पीयानेव समुचितो दण्डस्तेषां ये न निगूहन्त्यपराधानात्मनः । अनुतापो हि तेषां मनःकृतो दण्ड एव । परं निह्नुतापराधानामपराधिनां भिक्षूणां यदि कस्यचित् क्षोदीयानपि यायात् प्रकाशतामपराधस्तर्हि ज्वलल्लोहशलाकादग्धभालं तं विधायाश्रमान्निष्कासयेमेति न कदापि तेन विस्मर्तव्यम् " इति । मृणालिनीमुखनिर्गतामिमामाकर्ण्य वाणीं बहूनां पाणिभिर्धावितं ललाटं प्रति विना हेतुम् ।

यैरासँल्लिखिता अपराधा भिक्षुभिस्तेऽपि न तया विमुक्ता अगर्हिताः । तानुद्दिश्य तयाऽभाणि—" प्रीणयत्याश्रमदेवतां दिनचर्यालेखेष्वपराधलेखनमात्मन इति विज्ञाय बुध्यैव कैश्चिद् भिक्षुभिरकृता अपि गौरवलिप्सया लिख्यन्ते दोषाः स्वीया इत्येतद् विज्ञायतेऽनया देवतया " इति । एवमुभावपि तौ भिक्षुगणौ विगर्ह्य बहिः संप्रेष्य च प्रापितः पूर्णतां दिनचर्यापरीक्षणमात्मनो मृणालिन्या । तदानीमनन्यसमामेव तामालोक्य प्रकटितमन्दहासा भगवत्यवलोकिता सस्नेहमुवाच—' अहो वैचित्र्यं ते न्यायस्य । यतस्त्वया लिखितापराधा अलिखितापराधाश्चोभावपि दोषास्पदं नीयन्ते । कथं तर्हि वर्तितव्यं भिक्षुभिराश्रमे भवत्याः ? " इति ।

**मृणालिनी**—मदाज्ञानुरोधेन वर्तितव्यं तैः, एतावदेव काङ्क्षते मे चेतः । आश्रमे च तस्मिन् मृणालिनीत एव भियं दधुर्भिक्षवः सर्वेऽपि । शाक्तधर्मनिर्मूलनाय सज्जीभूतां तां समुत्सुकमानसामनेकशो निवारयन्ती चेष्टितादवलोकिताऽऽत्मानं हीनशक्तिमजीगणत् । भिक्षुसंघेऽपि च बहवोऽभवन् भिक्षवो दुराचाराः । आचरितेनात्मनः पापेन ते बौद्धधर्मं विशेषेण च भिक्षुगणमदूषयन् । अतस्तन्निवारणाय कठोरीकरणमासीदावश्यकं हृदयस्य मृणालिन्याः ।

ऊर्ध्वं दिनचर्यापरीक्षणात् प्रत्यहमन्योन्याक्षेपान् पर्यैक्षत मृणालिनी भिक्षूणाम् । अतोऽग्रतः संप्राप्तस्यान्यस्य भिक्षुगणस्य सा समारभत परीक्षणमेवम्—

पंडुकस्य नाम भिक्षोर्दोषमुद्दिश्यासीदेवं निवेदितम्—"भिक्षायै पर्यटताऽनेन मुषितं किमपि महार्हं वस्तु वर्तते स्थापितं निवासस्थल आत्मनः" इति । स पृष्टोऽवदत्—"सत्यं वच्मि । नैतन्मया मुषितम् । भिक्षायै भ्रमन्तं मामीक्षमाणा काचिच्छाक्तयुवतिः प्रत्यहं विहस्य प्रक्षिपति कन्थायामनिवेद्यैव मे वस्तून्येतादृशानि । किमत्र मे प्रतिविधानम्?"

"दृष्टानि निवासेऽस्य चौर्यानीतानि शस्त्राणि । निशायां चासावनेकशो वञ्चयित्वान्यानाश्रमाद् बहिः परिभ्रमति" इत्यभूद् दूषितो लोहितकः । सोऽब्रवीत् "प्रागाश्रमप्रवेशात् आसमहं महाधनः प्रथितयशाः स्तेनः । भगवतो बुद्धस्य प्रसादात् ततः प्राविशन्मे हृदयमनुतापः । परं दुस्त्यजा प्रकृतिः । अन्तरान्तरा पिशाचीव बलात् सा मां मोहयति । क्रमेणैव शनैर्मुक्तं मुञ्चति व्यसनं व्यसनिनम् । अन्यथा जनयति तदनर्थान् महतः । प्रोत्कटीभूतचौर्यस्पृह एवाहं कदाचिन्निर्गच्छाम्याश्रमात् स्वास्थ्याय मनसः । परित्यक्तफलस्पृह एवाहमाचरामि स्तेयं सर्वत्र । लब्धमपि चौर्यधनमनुपयुज्य स्वयं वितरामि सर्वं वयस्येषु । भित्तिभेदं कुर्वन्नपि नाहं संप्रति व्यापारयामि शस्त्रं गृहजनेषु । तथैव भित्तिभेदोऽपि न मया क्रियते चौर्याय परं निजकौशलदर्शनाय । प्राक् सप्ताहात् एकस्मिन् भित्तिभागे तथाहं निर्मितवान् मनोहरं विवरं यथा चौर्यान्वेषणागता राजपुरुषा विहायान्वेषणं विवरविलोकनविमोहितास्तच्चित्ररेखाविलेखनव्यापृता एवावर्तन्त" इति ।

अन्यौ द्वौ दूषयतः संगीतेनेत्यास्तां स्थापितौ दोषपक्षे । तावूचतुः—"प्रकृत्यैवावां मधुरस्वनौ । तथा च न केवलं गीते किन्तु नृत्येऽ-

पि कृतपरिचयावावाम्। ग्रामाद् ग्रामं परिभ्रम्य गायन्तौ शिवशिवापद्यानि नटनर्तनेनैव ग्रामीणान् पुराऽऽवामतूतुषाव। अद्यापि सन्त्यावयोस्तत्र तत्र सुहृदः परिचिताः। स्वीकृतभिक्षुदीक्षा वर्ततेऽत्र वाराङ्गना चित्रा नाम। मनोहरं तस्या मन्दिरमत्र नगरे। प्रतिदिनं पुरा स्वगृहमागच्छतो वल्लभाननेकान् श्रावयित्वा गीतादिकमस्माकं सा प्रीणयति स्म। तया स्ववृत्तिः परित्यक्तेत्यावाभ्यामपि परित्यक्तैव। परं प्रकृतिजा नोज्झति कला प्राणिनमामृत्योरित्यावामशरणावत्र विषये। तथापि संप्रति गीयमाने गीते 'शिव' इति वक्तव्ये 'बुद्ध' इत्येव कथंचित् पदं मुहुर्योजयामः" इति।

मृणालिनी सरोषं पप्रच्छ—"किं बधिराः श्रोतारः सर्वेऽपि। गीयमाने पद्ये शिव, शिवा, भगवान् बुद्धो वा कः स्तूयत इति न किं ज्ञायेत श्रोतृभिः"।

**द्वितीयः**—न ज्ञायेत। सन्त्यत्र केचिच्छ्लोका द्व्यर्थाः। यथा ते हरं स्तुवन्ति तथा हरिमपि। अतो हरस्येव हरेरपि भक्तास्तदेव पद्यं पठन्तः सममनुभवन्ति तोषं स्वहृदये। आवाभ्यामप्येवमेव शिव-बुद्धसंबद्धं द्व्यर्थमस्त्येकं पद्यं विरचितम्।

**मृणालिनी**—नैव शक्येत कुर्तुमेवम। यदि नैकया कामिन्या करकलितं कङ्कणं प्रभवति धारयितुमन्या तर्हि कथमकमेव पद्यं देव-द्वयं प्रीणयेत्?

**प्रथमः**—किमिति न प्रीणयेत्?। शृणोतु भगवती। अहं गायामि।

अवलोकिता विहस्यावदत् "अयि, तव परीक्षणेनैतादृशेन किमिममाश्रमं गीतशालां चिकीर्षसि?। अलं पद्यपठनेन" इति।

**द्वितीयः**—देवानां पद्यानि गीयमानानि जनेन गीतस्यैव शुश्रूषया श्रूयन्ते नैवार्थजिज्ञासया।

**प्रथमः**—अपि चावसाने पद्यस्य प्रेक्ष्य परितो बुद्धभिक्षून् प्रोच्चैर्वदामि — नमो बुद्धाय, बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, संघं शरणं गच्छमि ।

एवं यदेताभ्यां व्याख्यातं तदङ्गीकृतमवलोकितया । अथ रैवत-सुमनौ नाम भिक्षुद्वयं स्थापितं पुरो भगवत्याः । 'अक्षान् दीव्यत एतावाश्रमे' इत्यासीत्तयोरारोपितो दोषः । रैवतो न्यवदेयत् "अवसर एवाश्रमप्रवेशस्य परित्यक्तमावाभ्यां देवनम् । परं भिक्षायै पर्यटन्तौ नौ पृच्छन्ति सस्पृहं जना बहवः—'कदा करिष्यति वर्षं मघवा, कदा प्राप्स्यति जननीपदं भामिनी मे, कस्मादारभ्य दिनाद् भवेन्मयि भर्ता बद्धभावः, कदा लभ्येत मया धनमनल्पम्, कदा संभवो राज्यक्रान्तेः' इति । सर्वानेवंविधान् प्रश्नान् नागराणां प्रत्यहं पत्रे विलिख्याश्रम-विहारमुपगता वयं स्वस्थेन चेतसा बुद्धप्रणतिपूर्वमक्षान् प्रक्षिप्योत्तरं निश्चिनुमः । परेद्युश्च तदेव निवेद्य पृच्छकेभ्यो धनं—नहि नहि—भिक्षामाप्नुमः ।"

**मृणालिनी**—विक्रीयते भवद्भिरेवं भविष्यज्ज्ञानमात्मन इति न किं विदितं युवयोः ? ।

**सुमन**—विदितं तत् । परं नैतदावाभ्यामनुष्ठीयते स्वलाभाय स्वालाभस्य वा विनाशाय । भिक्षाऽपि धर्मसाधनमित्येव स्वीक्रियते । एवं स्थितेऽपि भाव्यं दात्रा प्रत्युपकृतेनेति कथमपि स्पृहा नो हृदये करोत्येव पदम् । अक्षमा वयं तां निर्मूलयितुम् ।

**मृणालिनी**—अपि ज्ञायन्ते यथार्थ्येन युष्माभिरर्था भाविनः ?

**रैवतः**—नैव । नांशतोऽपि किञ्चित् ज्ञायतेऽस्माभिः । कथ-यामोऽपि च वयं तथा जनान् । परं न नो वचसि ते विश्वसन्ति । किं क्रियते ? । एतदस्माकं मुण्डनं, पीतं च परिधानं, तथा जनान्

विमोहयति यथा ते मुग्धधियो मन्यन्ते स्वीकृतभिक्षुदीक्षाः सर्वेऽपि बुद्धानुयायिनः समर्था दातुं परेभ्यः सुखं परिहर्तुमन्येषां दुःखं, प्रापयितुं च सर्वान् निर्वाणमिति।

**अवलोकिता**—मृणालिनि, कृतमधुना विस्तरेण। किं वृथा पीडनेनैतेषाम्?। अवगतैतेषां मनोवृत्तिः। नैतानुज्झति धूतस्पृहा चिराभ्यस्ता! अतो व्याजात् परोपकृतेः कथंचिदात्मानमेते विनोदयन्ति। कालः शोधयेदाचारमेतेषाम्। तद् गच्छतामेतौ स्वकार्याय।

अथ कश्चिद् भिक्षुरन्यं कमपि भिक्षुमत्र दोषपक्षे स्थापितवान्।—'धारयत्यसौ स्वसमीपे गन्धतैलं सततम्' इति। सोऽपि पृष्टः प्रत्यवदीत्—"आसीदसौ ह्यः शयितः शय्यायां सुमनसाम्। कदाचिदहं तन्निवेदयेयमिह पुरो भगवत्या इत्यसौ पूर्वमेव मामारोपितापराधं चिकीर्षति। अस्ति मया स्थापितो लघीयान् गन्धतूलः कर्णरन्ध्रे। मदीयमेव घ्राणं मनागाप्याययति तस्य गन्धः। कथं नु स पीडयेदन्यान् गन्धेन। अनेन पुनः शय्यायां तावन्त्यासन्नास्तीर्णानि कुसुमानि यन्निखिलमपि नो निवासस्थलं सौरभसंपूर्णमगण्यत।

**मृणालिनी**—अपि तेन पीडितं वो हृदयम्?।

**भिक्षुः**—अथ किम्। भग्नोऽनेन नियम इति दुःखितं मे मनसा। घ्राणं तु नाम मानवानामिन्द्रियमेव। अतस्तेन कंचित् कालमुपनतो गन्धः। किमन्यच्छरणं तस्य वराकस्य।

एवमवसितं नियमोल्लङ्घनावेक्षणमाश्रमस्य दिने तस्मिन्। आरभ्यत ततो ह्यस्तनवितीर्णानां विचारणोपायनानाम्। केनापि सामन्तेनासीत् संप्रेषितं निष्कशतम्। एवमभून्निवेदितं पत्रसंदेशेन मंत्रिणा राज्ञः—"मध्याह्नेऽद्य स्वापसुखं सेवमानेन महाराजेन स्वप्ने समीक्षितं किमप्यशुभम्। तदनिष्टपरिजिहीर्षया प्रेपितमिदं निष्कशतोपायनं स्वीकृत्य क्रियतां प्रसादः" इति।

द्वितीयमुपायनमासीत् क्षेत्ररूपम् । समीप एवाभवदाश्रमस्यानतिविस्तीर्णो विभागो भुवः । चौर्ये लब्धकीर्तिस्तस्य भर्ताऽवर्तत कोऽपि महान् पाटच्चरः । न प्रायः स्वयं सनिरगच्छत् कर्हिचित् स्तेयाय । बहवो अभूवंस्तस्य समीपे तदाज्ञानुवर्तिनः स्तेनाः । नियुज्य तान् पोषणकर्मणि सर्वदा स तैरपाहारयद्धनानि धनिनामघातयच्च पथिकाननेकान् । अन्यैर्ग्रन्थिभेदकैरानीतानि महार्हाणि वस्तूनि मुषितानि क्रीत्वा स्वल्पमूल्येन सततं तानतोषयत् । आश्रमोपान्तवर्त्यसावुपायनीकृतो भूभागः शिलासंघसंकुलो नासीदुपयुक्तो जनानाम् । तथाप्युपायनेनाश्रमसाहाय्यकर्तॄणां दातॄणां नामपङ्क्तौ प्रविष्टनाम्नो मेऽभिधानं यास्यति गोचरतां राज्ञो मंस्यन्ते च मां जनाः पुरस्कर्तारं बुद्धधर्मस्य । तथात्वमुपगते नामनि लब्धकीर्तिरहमुपायान्तरैः परिचितैः प्राप्नुयां सहस्रगुणं दत्तपूर्वस्योपायनस्येति निश्चितमभून्मनसि तेन ।

अन्यदुपायनमासीत् प्रेषितमुल्लूप्या नाम कयापि पण्याङ्गनया । हीनमात्मनः कुलाचारमधिकृत्य संप्रति प्राप्तवैराग्यया तया प्रच्छन्नं परिणीतः कोऽपि बौद्धः । ततश्च प्राक् परिणयात् देहपण्येन प्राप्तं धनं विभागशः समर्प्याश्रमायात्मा भूयः पावयितव्य इत्यभूदुत्पन्नं चेतसि तस्याः ।

अन्ततः संघप्रविविक्षया संप्राप्ताः सप्रशस्तिपत्रास्त्रिचतुरा भिक्षवः संप्रविष्टसंघा अक्रियन्त ।

नासीद् दुश्चरो विधिः संघप्रवेशस्य । आश्रमाधिपतिना निश्चिते प्रवेशे यस्य कस्यापि दूरं गतः सोऽतिष्ठत् पुरः प्राञ्जलिः । आह्वयदाश्रमाधिपस्तं ततः ‘ एहि भिक्षो ’ इति । एवमुक्त एव तेन स संप्राप्ताश्रमप्रवेशोऽगण्यत । पूर्वमाश्रमप्रविष्टैर्भिक्षुभिः सह स तत आरभ्यैव वस्तुमारभते स्म ।

एवमासीत् प्रत्यहं विधिः प्रभाते । अवसिते विधावद्यतने सह मृणालिन्या समुदतिष्ठदवलोकिता । तत एकैकशो भिक्षुगणो मृणालिन्या निर्दिष्टपूर्वां दिशं प्रति प्रायात् । येषां नासीदद्य भिक्षाक्रमस्ते तत्रैव स्थिता अन्यस्मिन् स्वे स्वे कर्मण्यभिरता बभूवुः । प्रथमविधेरवसानं द्वितीयविधेश्च समारम्भं सूचयितुं सततमाश्रमसन्निहिता श्रुतिभैरवमकार्षीद्रवं घण्टिका प्रत्यहम् ।

प्रातर्भैरवपुरनिवासिन्या देव्या महाकाल्या आलयगता बलिदानकालपिशुना, आम्रवेणुवनविहारवासिनां बुद्धानुयायिनामहिंसोपदेशिनां भिक्षूणां धर्मसाधनाय बहिर्गमनसूचिका च घण्टिकैकदैव प्रायेण प्रतिदिनं निनदति स्म ।

— इति चतुर्थः परिच्छेदः ।—



## पञ्चमः परिच्छेदः ॥

### अग्निवर्णो रुद्रभटश्च ।

—:*:—

देवीदर्शनलोलुपैरिह जनैः सङ्ख्यातिगैः सङ्गतै-
र्यायुः प्राक् सुचिरं भुवस्तलमहो भक्त्याऽर्पितास्तण्डुलाः ।
विश्रान्तिं लभते मुहुः पशुशिरश्छेत्ताऽद्य यः सौनिक-
स्तेनाजङ्घमसृक्समर्पितपदं तस्थे दिनं चाखिलम् ॥१॥

देवी तुष्टा किं न दद्याच्च, रुष्टा
किं नो हन्याद् यस्य कस्यापि जन्तोः ।
मुक्त्वा शङ्कां ब्रूहि तत् काङ्क्षितं ते
प्राप्तुं देवीं प्रीणयित्वा यतिष्ये ॥१॥

सुतरां प्रत्नमासीन्नगरं भैरवपुरम् । तत्रत्यस्तु कालिकालयः प्रत्नतम एव । प्रथममुदभवत् कालिकामन्दिरं ततः समन्ततः क्रमेण प्रारोहद् भैरवपुरम् । एवमेवेह प्रायेण प्ररोहन्ति तीर्थक्षेत्राणि सर्वत्र । विहाय नरनिवासस्थलं दूरे वनवासं स्वीकुर्वत् दैवतं न कर्हिचिद् बिभेति वन्यादालोकाद् भीषणात् । तस्य च तु जनयित्रा भक्तवरेण प्रायो निर्भीकतरेण विद्विष्टजनसहवासेनैकान्तप्रियेण वा भूयते । स च प्रथममन्विष्य दैवतं भाषते " भगवन्, जनसहवासनिर्विण्णोऽहमिह वसेयमेकाकी सह त्वया । न मे प्रयोजनं जनैरन्यैः " इति ।

परमकालहीनं प्रसरति पुष्पाणामिव दूरत एव गन्धो भक्तेर्भक्तानामेवंविधानाम् । तेन च चिन्त्यते भक्तिभाग्भिर्ग्रामीणैः कतिपयैः— " अहो ग्रामवर्ती स नरो विहाय सांसारिकानखिलान् दुःखपाशान् वनगतो वैराग्यसुखं सेवते प्रसादाद्दैवतस्य । प्रभवति हि दैवतमेवं सुखयितुं

जनान् भक्तिभाजः। वयमपि च भवेम भाजनमंशतो भक्तिप्रणता वनगताः" इति। एवं केचित् तत्र पारलौकिकं लाभं मनसि कुर्वाणा उपेत्य दैवतमुपासते। वैराग्यपराङ्मुखाः संसारसुखाभिलाषिणश्चान्ये, स्वर्गसुखदानक्षमेयं देवता भक्त्यर्चिता लीलयैव वितरेदस्मासु सुखं सांसारिकमिति मन्वानास्तत्र संगच्छन्ते। कदाचित् कथमपि च पूर्णमनोरथास्ते संवर्धितभक्तिगुणाः प्रत्यहं प्राप्य सोत्साहं भजनपूजनादीन् विधीनारभन्ते।

अथ विपुलीभूतानालोक्य भक्तगणान् अर्हणार्हवस्तुविक्रेतारो वणिजो नयन्ति निजनिवासस्थलतां तत् स्थलमनेकशः। बहिर्नगराद् विवित्सिषवः केचित् ततो रचयन्ति तत्र गृहाणि चारुगवाक्षाणि। एवं पूर्वं निर्जनमपि तत् स्थानं नरपरिवेष्टितं न चिराद् क्रमेण ग्रामतां नगरतां चायाति। प्राङ्निर्वाणाद् बुद्धस्यानेनैव विधिना तद् भैरवपुरं सुचिरमासीद्राजधानीपदमुपगतं कस्यापि शाक्तपथानुयायिनो नरनाथस्य।

अभितो देवीं वर्तमानस्य जनगणस्येव देव्या अपि रूपं क्रमेणाऽभूत् परिवर्तितम्। प्राप्तदेवीरूपेऽस्मिन् प्रस्तरे न ज्ञायते किं प्रथमं स ज्ञातवानाद्यो भक्तवरः। परं शनैः शनैरन्ये जज्ञिरे यत् स्वयमेव देव्याकृतिमुपगता सा शिलाऽकर्तृकैवेति सकर्तृकाया अकर्तृकायामधिकादरं प्रकृत्यैव हृदयं जनानाम्। एवमेवात्रत्येयं कालिकामूर्तिरप्यासीदास्पदमादरस्य जनानामनल्पनाम्।

नभोगतेषु नीरदेषु नरः कल्पनया कल्पयति कामप्याकृतिम्। तथैव भाविकानामप्यक्षीणि प्रस्तरचयेऽपि प्रसृते स्फुटावयवां देवाकृतिमीक्षन्ते। एवं कालिकाङ्गभूतेऽस्मिन् प्रस्तरचयेऽपि प्रथमं कालिकायाः शिरः,ततो हस्तपादं,ततश्चाभरणानि,भक्तानां चक्षुषोर्लक्ष्यतामीयुः। क्रमेण च केचिद् महिषासुरमर्दिनीहतस्य तस्य महिषासुरस्य शवमपि सद्यो विगतजीवं देवीचरणतलसंसक्तं ददृशुः। केचिच्च परितो देवीम-

भिलिखितमखिलं पौराणिकं कालिकाख्यानमाचख्युः। एवं देवताया देवतोपासकानां चावर्धत क्रमेण माहात्म्यं प्रत्यहम्।

अल्पैरेवाहोभिरभितः कालिकामधिकारिणां समगच्छन्त संघाः पूजकानाम्। भक्तवरैर्देव्याः पुरः स्थापितस्य धनस्य केन कियान् ग्रहीतव्यो विभाग इत्यधिकृत्य तेऽन्योन्यमनेकशोऽस्पर्धन्त। सकामैरकामैरपि च सहस्रशो भक्तवरैरनुदिनमर्पितानि धनानि न चिरादस्पृशन् कोटिसङ्ख्यामपि प्रतिमासम्। अतः समर्प्यन्त देव्यै राजभोगाः, समर्च्यत च सा समुपचारै राजोचितैः। स्त्रीभावे वर्तमानाऽपि कालिका पुरारातिपत्नीपदप्रतिष्ठिता विशेषेण पुरुषसदृशविक्रमैवेति नारीणामिव नराणामप्युपास्यतामागता नरनारीवस्त्रालंकरणादिभिरुपचारैरुपाचर्यत। गजाश्वडिण्डिमान्दोलिकाछत्रचामरादीनि पर्यवारयन् देवीं राजचिह्नानि। नगरनिवासिनो नराधिपस्योपास्यतामुपगततया च देव्याः परां भुवमुपागमद् विभवः। बलिरूपेण नरा अप्यहन्यन्त मुहुः पुरो देव्याः। एवं भूगतानां मानवानां कृते सुखसंप्राप्यं स्वर्गकवाटमुद्घाटितं कालिकामन्दिरेणानेन भैरवपुरे। परं राजविभव इव देवीविभवोऽप्यस्थिरजनमनोधिष्ठितोऽचिरस्थाय्येव।

अत ऊर्ध्वं भगवता बुद्धेन बलादारभ्यत दूरोत्सारणं शाक्तधर्मस्य। परप्राणापहारिणो वैदिकान् यज्ञादिविधीन् विगर्ह्य तथा तेनान्तरान्तरोपादिश्यन्त शाक्ता यथा ते ज्ञातदोषा अनुशयान्विता अचिरेण स्वाचारपराङ्मुखमानसा बभूवुः। नीत्यां पुण्यं शान्त्यां च मोक्षमीक्षमाणैस्तैस्तीर्थक्षेत्रोपासनाबलिदानादिकात् व्यरम्यत कर्मणः कष्टफलात्। माहिषासुरमर्दिनीहतो महिषासुरो नासीदतितरां विदितो जनानां प्राङ्मरणात्। मरणमेव कारणतामयात् तस्य प्रथायाः। गौतमोऽपि बुद्धो मरणादूर्ध्वमेव 'भगवान्' इत्यभिधामवाप। तस्यैव प्रेम्णा जनैरेव तत्र तत्र न्यषिध्यत हिंसाप्रधानो धर्मः शाक्तानाम्। अराज-

निषिद्धोऽपि हिंसाधर्मोऽधर्मधियमजीजनन्मनसि मानवानां हिंसा-विद्वेषिणाम् । अतः कालिकालयेऽनुदिनं परिक्षीणतामत्राप वधः पशूनाम् । किमधिकम् । परिवर्धमानदेवीद्वेषेण देवालयपरिसरसंगता विपणिरपि क्रमेण क्षयिणी जायते स्म ।

पुराणपरिपाटीप्रकल्पित आसीत् स आलयः कालिकायाः । अपङ्कसुधासंयोजिता महाशिलावलिविनिर्मिता बभूवुरभितो भित्तयस्तिस्रः। पाषाणचयविरचितं व्याराजतैकं शिखरं शिरोभागे मन्दिरस्य । तमोबहुलेऽन्तर्भागे न कर्हिचिदवाप्तुं शेकुः प्रवेशं रविकिरणाः । अन्तर्गतेन तमसा न नश्येतेति धिया भित्तिभागेषु कथमपि विषमविराचितात् सुषिरत्रयात् अन्तः प्राविशन् कदाचिदेव वाताङ्कुराः । ईषद् विस्तृते पुरः स्थिते सभागृहेऽपि तावन्तमेव प्रकाशं जनयितुं प्राभवच्चण्डधामा यावता तत्र संगता जनाः कथमप्यन्योन्याननमीक्षितुं प्रबभूवुः । नात्रत्या भित्तयोऽभवन् धवलिताः सुधाभिर्नापि वा समलङ्कृता विविधवर्णाभी रेखाभिरनेकाभिः । सुधाधवलिम्नो हि पङ्कमालिन्यमेवैवंविधानां प्राचीनालयानां प्रीणयतितरां भक्ताननेकान् । एषु दिवसेषु निर्गतजनसंचारेऽस्मिन् मन्दिरे यदृच्छाजातास्तरुवीरुधस्तत्र तत्र पन्थानं रुरुधुः । जनानवेक्षितः प्राकारो बद्धमूलैस्तरुगुल्मकैः क्वचिदुत्पादितकुहरः क्वचिच्च प्रभ्रष्टशिलोऽलक्ष्यत ।

न कदाचिददीप्यत प्रायो दीपः सभागृहे । अन्तर्भाग एव दिवानिशमद्योतत खद्योतानुकारि दीपोऽद्वितीयः । तेन च सर्पादिदंशमुत्प्रेक्षमाणा जना न सहसा संप्रवेशसमुत्सुका अभूवन् । प्रोत्कटभक्तिगुणश्च यदा कश्चित् प्राविशद् भक्तस्तदान्तश्चिरोषितस्य भीत्या निर्गच्छतः कपोतस्यान्यस्य वा पक्षिणः पक्षाणां स मुखे चपेटामन्वभवत् ।

प्रातरेवाल्पीयान् यामद्वयमलक्ष्यत संमर्दो भक्तपूजकानां मन्दिरे मृडान्याः । निकटवर्तिन्यां नद्यां स्नानं, देव्या दर्शनं, पूजनं, बलिदान-

मित्यादीनां विधीनामनुष्ठानायायमेवानुकूलोऽभूदवसरः । दर्शनपूजनादिषु विधिषु प्रामुख्यपदं भेजे बलिदानविधिः । अस्यैव हेतोः पुरतः सभागृहस्य प्राङ्गणे पार्श्वयोरास्तां स्थापितौ वधस्तम्भौ । सरन्ध्रमभवच्छीर्षमस्यस्तम्भयुगलस्य । मेषग्रीवाग्राहकमेकं लघु महिषग्रीवाग्राहकं चान्यत् पृथुतरमभूत् । स्तम्भस्थापितं मेषस्य महिषस्य वा शिरो विहाय कलेवरं यथाऽसिप्रहारेणैकेनैव भुवमापतेत् तथाऽऽसीदत्र सर्वं सुविहितम् । बलिदानहेतुना समानीतपशुर्भक्तो न चिरं प्रतिपालनपीडितः स्यादिति तत्कर्मनियोजितः सौनिकः करकलितनिशितकरवालः सर्वदाऽवहितः पुरस्तस्थौ । तत्साहाय्यकारिणी च सहधर्मचारिणी तस्य खड्गान्तरशाणनतत्पराऽन्तिक एव तं संततमसेवत ।

नासीत् बहुभोजिनी देवी कालिका । बलिहतस्य पशो रुधिरेण स्तोकं सिञ्चनं हतस्य पशोरल्पीयसो मांसस्य दूरात् सकृन्निवेदनमेव देवीमपिप्रिणत् । एतावत् समर्प्यावशिष्टस्य स्वेच्छयोपयोजने न कर्हिचित् किमपि परिपन्थितामयात् देवीभक्तस्य । भक्तोऽपि प्रायोऽल्पतुष्टः स्वल्पं स्वीकृत्य शिष्टं सौनिकसात् करोति स्म । मांसाहारनिर्विण्णः सोऽपि स्वेच्छयाऽल्पमुपयुज्यान्यदखिलं क्वचिदापणे विक्रयार्थं प्रसारयति स्म । ऊर्ध्वं मध्याह्नात् अविक्रीतानि शवानि संगृह्य स सौनिकः समीपस्थितायां अग्निवर्णोद्यानकुल्यायां प्रक्षाल्य मांसमात्रमादायावशिष्टमुद्यानकोणे स्थापयति स्म । तदेवान्नमुपभुञ्जाना उद्यानपादपाः सदा विपुलफलपुष्पधारिणो भवन्ति स्म ।

फलपुष्पविक्रयाद् विपुलं धनमलभतोद्यानभर्ताऽग्निवर्णः । उद्यानविकसितानां कुसुमानां प्रतिदिनं कालिकार्चनायार्पणीयोग्निवर्णेन हार इत्यासीत् विहितः समयः स्वामिना देवस्थानस्य । विना प्रमादं प्राप्नुवन् हारमग्निवर्णात् स देवस्थानपतिर्धर्मधिया सुतरां मुमुदे । बलिहतः पशुः स्वर्गं लेभे । पशुसमर्पकः पूजकः पशुघातकश्च सौनिकः

स्वर्गदानकल्पनयाऽऽत्मानं धन्यं मेने । बलिहेतोः पशुक्रयासमर्थाः केवलं भक्ताः स्वर्गसाधकमेतत् पुण्यमवाप्तुमक्षमा वयमिति मनसि सुतरां विषेदुः । परं तेऽपि भूनिहितजानुचरणा वधस्तम्भप्रणामपरा हन्यमानस्य पशोः कतिचित् रुधिरबिन्दून् आत्मनः शिरसि धारयन्तः पूताभिषेकधिया धन्यतमानात्मानं मेनिरे । सिन्दूरचर्चितभ्रूमध्यभागः कालिकालयं प्रविशन् प्रत्येकः शाक्तो विना स्खलनं बलिरुधिरतिलक-विभूषितभालो निर्जगाम ।

एवं पुरातनेऽस्मिन् कालिकालये बलिदानसमासादनीयानि पुण्यानि शतशो वत्सरान् समचीयन्त भक्तैरसङ्ख्यैः । न कोऽप्यलक्ष्यत पशुस्तत्कृते परिवादकरः । करवालकर्त्यमानग्रीवस्य पशोः कण्ठनालान्नि-सरन् घोषः समुद्घाट्यमानस्वर्गकवाटार्गलाहरणरव एवेत्यगृह्यत सर्वदा शाक्तैरखिलैः ।

इत्थं तत्र यथाविधि स्वाचारतत्परेषु शाक्तेषु भगवतो बुद्धस्या-नुयायिनोऽनेके हिंसाप्रतिकूलैरुपदेशैर्जनानां बुद्धिभेदमजीजनन् । संप्रति चैतेषामुपदेशास्तथाऽस्पृशद् हृदयमर्माणि जनानां यथा पूर्वमजीर्णबाधिताः पूजकसौनिका अधुनाऽन्तरान्तराऽनशना दिनान्यत्यवाहयन् । अग्निवर्णो-द्यानगताः पादपा अलब्धदोहदा यथापूर्वं नाभवन् फलपुष्पधारिणः । संकुचितं विक्रयेण फलकुसुमानाम् । विघ्नितश्चान्तरान्तरा हारार्पणस्य देव्या व्यवहारः ।

अथाष्टमी तिथिः । विपुलमभवद् बलिदानमष्टम्यां कालिकालये । तं च मंगलविधिमक्ष्णोर्लक्ष्यतां निनीषवो बहवो भक्ता भक्तिभाजो नयनफलं लभन्ते स्म । प्रातः सूर्योदयादारभ्यैव प्राङ्गणवर्तिनी महती घण्टा कर्णभैरवं ननाद । केचित् शैवाः शाक्ता वा नदीजले कृतस्नाना देव्या दर्शनार्थमाजग्मुः । बलिदानाक्षमाः केचिद् द्वारदेशसमुपविष्टात् पुष्पविक्रेतृकात् क्रीत्वा कतिचित् रक्तकुसुमानि बलिसमर्पणादूर्ध्वं पुष्प-

समर्पकाणां नराणां गणे स्वासनक्रमं स्थिरीचक्रुः । सभागृहविष्टरोपविष्टाः केचिद् विप्राः प्रोच्चैर्देवीस्तोत्राणि पेठुः । कदाचिद् बलिहेतुना हन्यमानस्य पशोः सौनिककरसंताडितस्य वा खड्गस्य रवः समुदभवत् । परमचिरादेव स "जय मातः, जय चण्डिके, जय भवानि, जय जगदम्ब" इत्यादिषु भक्तजनगर्जितेषु व्यलीयत ।

घटिकाद्वयमवर्तत देव्या महापूजाविधिः । परं तावत्येव काले रुधिरसिक्ततया सोपानपङ्क्तेः कालिकालयस्य तदारोहणकृतदेवालयप्रवेशानां भक्तानां रक्तैश्चरणैः सर्वोऽपि वर्तुलाकृतिः स देव्याः प्रदक्षिणापथो रुधिरमय इवाभात् । शाक्तानां तावदद्योत्सवदिनमेव । परमन्येऽपि नागराः समधिकोत्साहा अलक्ष्यन्त ।

अस्मिन्नेवावसर उत्साहहीनमानसौ द्वौ शाक्तवरौ कालिकालयाभिमुखमापेततुः । चरणनिहिताक्षियुगलौ मन्दगतिकौ तावुभावपि परस्परकूजनपरावास्ताम् । यथा यथा ते परितो मन्दिरं दृष्टिं निचिक्षिपतुस्तथा तथा तौ संवर्धितविषादावेवावर्तेताम् । आमहाद्वारसंप्रापणं तावुभावन्योन्यं किमप्यविरतमभाषेताम् । परं तत्र संप्राप्तौ तौ द्वारदेशस्थितं कमपि पुरुषमभिसमीक्ष्योभावपि समुपारूढमन्युवेगावलक्ष्येताम् ।

स्वस्थाने स्थितोऽसौ पुरुषो निश्चलोऽतिष्ठत् । जीर्णमन्युरभिधानमेतस्य । निमीलितार्धनयनः, नासाग्रनिहितदृष्टिः, आकूर्परबद्धपाणि; परिहितलघुपीतवासोयुगलः, आगलानुष्ठितमुण्डनः, यातायातजनप्रार्थनाव्यापृताननोऽपि गौराङ्गनागमनसमुन्मीलिताक्षोऽसौ बुद्धभिक्षुः कालिकालयसंगतानखिलाञ् शाक्तजनानुद्दिश्य विरचितामिमां प्रार्थनां प्रोच्चैः पपाठ—

## – प्रार्थना –

दयाधर्ममूलं वचः सत्यमेतत्
पशून् घातयन्तीह धर्माय किं तत् ॥
पशुप्राणघातात् ध्रुवं स्वर्गलाभो
भवेदित्यहो ज्ञायतेऽज्ञानतः किम् ॥
अधर्मः स्फुटं " धर्म " इत्येव मत्वा
वृथा पापमातन्वते किं भवन्तः ॥
शमेनासिना कामकोपौ निहत्य
बलिं साध्नुत द्राक् स वो मोक्षदः स्यात् ॥
स्पृहा दुःखमूलं हता चेत् समूलं
नरो मोक्षभाक् स्वर्गभाग् वा ध्रुवं स्यात् ।
स्पृहाया विनाशादिह स्वर्गलाभः
स्पृहानाश एवात्र मोक्षो न चान्यः ॥
जगत् सर्वमीशस्वरूपं सुरूपं
जगज्जीवजालं स ईशोऽस्ति नान्यत् ॥
अतो जीवसंरक्षणं शक्तिपूजा
विनाशेन तुष्यन्ति मोहाद् भवन्तः ॥
जडान्धादिदीनोद्धृतौ बद्धभावाः
सयत्ना जना जन्मभाजो यथार्थाः ॥
अतः प्रेमयोगात् जगत् जेयमेतद्
विजित्याचिराद् राजता प्रापणीया ॥

प्रोत्कटतया गायकस्वनमाधुर्यस्य गन्तृकागन्तृकेषु तेषु शाक्तेषु न कोऽपि गीतशुश्रूषासुखं यदृच्छाप्राप्तं विना स्वादनात् प्राभवत् परित्यक्तुम् । अतः सर्वेऽपि कंचित् कालं संतर्पितकर्णपुटाः पन्थानमसेवन्त । उपरि

वर्णितावपि शाक्तौ न शेकतुरात्मनः शुश्रूषां क्षणं नियन्तुम् । परं श्रुतिसुभगमपि गीतं न तोषाय तीव्रविकाराक्रान्तस्य मनसः । भिक्षोश्चास्य गीतध्वनौ हिंसाविगर्हणं, अहिंसानिरूपणं, भगवतो बुद्धस्य च श्लाघनं समाकर्ण्य संजातकोपौ तौ मुक्तशुश्रूषौ न चिरात् अश्लीलवाग्वृष्टिमस्मिन्नवाकिरताम् । सार्वजनिकतयैव तस्याध्वनो न तावेनं पाणिपादप्रहारैः सच्चक्रतुः ।

अन्ततोऽन्यदेवायतनमाद्यमात्मीयं कार्यमिति दर्शयन्तौ तावुभावपि महाद्वारमार्गेण प्रविश्य मन्दिरं वधस्तम्भान्तिके तिष्ठता सौनिकेन सह "कति हता अद्य पशवः, कति भूयो हन्येरन्" इत्यादीनि पृष्ट्वा तत्कथितया वार्तया विषण्णतरामेव मुद्रां धारयन्तौ तावन्योन्यमुच्चैरभिभाषितुं प्रावर्तेताम् ।

एतयोः पुरुषयोरासीदेकः शाक्तोऽग्निवर्णो नाम । आसन्नचत्वारिंशदासन् वर्षाण्यस्य जातस्य । देहपरिहितैर्बहुमूल्यैर्वासोभिरन्वमीयतास्य वैपुल्यं वित्तस्य । आसीदेव स तथा धनवान् । भैरवपुरश्रेष्ठिवरमेनं न कोऽप्यन्योऽभवच्छक्तस्तुलयितुं विभवेनात्मनः । कालिकालयनिकटवर्तिनोऽग्निवर्णोद्यानस्य बहुफलस्यासीदसौ भर्तेति कथितपूर्वमेव वाचकवराणाम् । नास्याकृतिरासीदभिधानसदृशी भीतिदा । स्थूलं शरीरं, सौम्यं मनः, स्नेहला प्रकृतिः, परेच्छानुवर्तनप्रवृत्तिश्चासाववर्तत । द्युतिमद्धीरकसंयोजितनाङ्गुलीयकानां पञ्चकेन भूषिताङ्गुलिपञ्चकतया भूषणलोलुपतास्मिन्नशङ्क्यत । कर्णविवरप्रवेशिताङ्गुलिरयं समाकृष्टगन्धतैलो मुहुः सौरभं जिघ्रति स्म ।

अन्यः पुरुषो रुद्रभटो नाम मध्यमवयाः, तनुगात्रः, तुङ्गकायः, रूपाढ्योऽपि तामसः, अत्युग्रदर्शनश्चाभूत् । काषायैस्तस्य वासोभिः स यतिर्गृहस्थो वेति न कोऽप्यलं विनिश्चेतुम् । तस्य हि तरलकनी-

निकेन नेत्रयुगलेनानुक्षणमुद्भवन्त्यस्य चेतसि केऽपि विचारा नवनवा इति स्फुटमन्वमीयत । यथाग्निवर्णस्तथा रुद्रभटोऽपि भैरवपुरे श्रेष्ठतरोऽगण्यत नागरिकः । अयं हि तत्रत्यस्य शाक्तधर्माधिकृतमंडलस्य संप्रत्येवाध्यक्षपदे नियुक्त आसीत् ।

सर्वेषु धर्मकार्येषु कालिकालयव्यवहारनिरूपणमप्यासीदेकं गुरुतरं कार्यं रुद्रभटस्य । तच्च कार्यमनुतिष्ठताऽनेनाज्ञायि यथा कालिकालये बलिदानविधिर्धनागमोऽपि च दिने दिने क्षीणतरतां प्रयाति, न यथापूर्वं सर्वेऽपि देव्यां सादरा नागराः, अस्खलितप्राधान्येऽपि शाक्तधर्मे बौद्धधर्मोऽपि क्वचिदङ्कुराभिमुखो भवति, अनुज्झितशाक्तधर्माणोऽपि बहवः श्रुतबुद्धभिक्षूपदेशा हिंसाप्रधानं विद्विषन्ति धर्मं शाक्तानाम् इति । अनेन च व्यतिकरेण क्रोधपावकप्रतप्ततनुः स कथमियं परिहार्या विपदिति संप्रति विचारविवशीभूतचेता एव दिवानिशमवर्तत ।

अद्याष्टमीति कालिकादर्शनाय गच्छन्तमालोक्याग्निवर्णं तामेव दिशं प्रस्थितो रुद्रभटो मार्गे संगत्य सह तेन तौ बुद्धधर्मातिक्रमविषयमेवैकमधिकृत्यैवमूचतुः—

**रुद्रभटः**—अष्टमी तिथिः अद्य, अग्निवर्ण । अष्टम्यां पुरा प्रवेशोऽप्यासीदसुलभः कालिकालये । सत्यामप्यष्टम्यामद्य तु सुखं विशन्ति निर्गच्छन्ति चालयाद् विरलतयाऽप्राप्तशरीरस्पर्शा भक्तगणाः । प्राङ्गणगतयोर्वधस्तम्भयोरेको महान् माहिषस्त्वद्यानार्द्र एव । अन्यस्मिन्नपि वधस्तम्भे तथैव समर्प्यन्तेऽद्य मेषा यथा स तत्राधिकृतः सौनिकोऽन्तरान्तरा कामं विश्रान्तिसुखमपि सेवितुं प्रभवति । एतदेव विशदयति यन्नास्तिक्यधियाऽङ्कुरितमस्मिन्नगर इति । कथमियमधर्मोन्नतिर्नङ्क्ष्यति कथं च भूयः शाक्तधर्मप्रवणानि भविष्यन्ति जनानां मनांसि नागराणामखिलानामिति विचारैर्निशायामप्य-

प्राप्तनिद्रस्यैषु दिवसेषु दिवानिशं ताम्यति मे चेतः । दिष्ट्या न भवन्तं बाधते धर्मविचारणैतादृशी । तथापि किमर्थं भवानप्यहमिवालक्ष्यतेऽद्य पर्याकुलः ? । स्वापणव्यवहरणे द्रष्टव्ये किमिति भवताऽस्मिन्नवसरेऽत्रैव क्वचिद् विषण्णाननमट्यते ? । धर्मकार्यावेक्षणे विनियुक्तेन मयाऽधुनेऽत्र स्थेयमित्युचितमेव । परं नगरश्रेष्ठिवरेण भवताऽस्मिन् काले केनचिन्निरुद्यमिनेवात्र वर्तिततव्यमिति नूनं कौतुकावहं जनानाम् । तत् किं निरुद्धास्ते लाभा अपेक्षिताः प्रत्यूहैः ? । परं न प्रायेणोद्वेगकरी लाभहानिर्भवत इति पृच्छामि किं ते निदानमुद्वेगस्याद्यतनस्येति ।

**अग्निवर्णः**—सम्यग् भाषितं भवता । प्रसन्नस्ते तर्कः । धर्माधिकारिणि वर्तमाने भवति किं मे प्रयोजनं धर्माविरोधविचारणया । व्यवहारे च यथाऽहं संप्रति भाग्येन दत्तहस्तस्तथा न पूर्वं कर्हिचित् । बलिदानपरिक्षयेणोद्यानधनमंशतो गतं न्यूनतामित्यवितथम् । तथापि सुसंवर्धितैरन्यलाभैरयमलाभो न कदाचिन्मे मनोभुवमप्यवतरति ।

**रुद्रभटः**—एवं स्थितस्यापि ते समाकीर्णं मनो विषादेनेत्यस्त्यवकाशो मे तर्कस्य ? ।

"कथमिव ?"

मन्ये गृहिणी ते भवानी भवने भवति बद्धकोपाद्येति । ग्राम्याः सर्वे व्यवहारा भवदधीनाः परं भवान् भार्याधीन इति सर्वत्र बहुलीभूतमेव । तन्नूनमद्य ध्वान्ते गृहमध्यवर्तिनि भवानुत्पाटितश्रोत्रयुगलो मे प्रजावत्या । अथवा कंचिदपराधमधिकृत्य शासितुं त्वां न प्रकल्पितस्ते यथासमयं प्रातराशः । धनानां हानेरपि मानिन्या विमानना पीडयतितरां म नो भवादृशस्य ।

" रुद्रभट, मैवं तां स्थापय दोषपक्षे । यथा सा सस्नेहा तथा विधेयाऽपि । प्रथमं तावन्न सा कुप्यति कर्हिचिन्मे । अन्यच्च कुपितापि सा न परिहरेत् कदापि सेवनं म इति निश्चयः । नाद्य यावत्सकृदपि

तयाऽहं विमानितः । परमेतादृशी सा गुणखनिरित्येव तस्याः खेदो मामतितरां खेदयति । "

" किं पीड्यते सा केनाप्याधिना शारीरेण ? "

" न तस्या दुःखं शारीरं परं मानसम् । "

" तत् किं भवान् न युनक्त्युपायं तस्य परिहाराय ? "

" स्वयमुपायमीक्षितुमक्षमोऽहं त्वामेव प्रष्टुकामो गृहान्निरगमम् । देवीदर्शनादूर्ध्वं त्वं द्रष्टव्य इति मनसि भावयन्नहं यावत् पर्यटामि तावत् त्वमेव मार्गे मे चक्षुषोर्लक्ष्यतां यातः " ।

" भवतु । एहि, देवीं प्रणम्य त्वदीयं गृहमुपगतौ तत्रैव स्वस्थेन मनसा विचारयामः " ।

एवं भाषमाणावेव तौ यावद् देवालयं प्रविशतस्तावदेव कश्चिदग्निवर्णभृत्यः समुपसृत्य बहिःस्थिते वधस्तम्भे घातितस्य कस्यापि मेषस्य स्रवद्रुधिरं कौशेयवसनावेष्टितं शिरः सविनयं समानीय स्वामिनोऽग्निवर्णस्य पाण्योः समर्पितवान् । तथैव कतिचित् पुष्पाणि पत्राणि दक्षिणायै सुवर्णनाणकानि च द्वित्राणि समर्प्य स निरगात् । अग्निवर्णोऽपि मेषमस्तकक्षरता रुधिरोदकेन देवीमभिषिच्य तेनैवाभिषेकासृजा भाले ललामं विधाय समर्पितपत्रपुष्पः पुरः स्थापितसौवर्णनाणकः सहैव तेन रुद्रभटेन भूयो देवीं प्रणम्य देवालयदक्षिणद्वारमार्गेण बहिः प्रातिष्ठत । तमनुसरन् रुद्रभटोऽपि देवालयाधिकारिप्रवर इति तत्रत्यान् भृत्यपूजकान् किमपि किमपि साभिनयमादिशन् अग्निवर्णेन सह समुल्लङ्घितमन्दिरप्राकारः शनैः तद्भवनाभिमुखं चचाल ।

इति पञ्चमः परिच्छेदः ।

## षष्ठः परिच्छेदः ।

### ( कलहबीजम् )

प्रागागमनादुभयो रेतयोरग्निवर्णाङ्गना भवानी सह नीलया प्राङ्गणप्ररूढस्य कस्यापि महामहीरुहस्याधश्छायायामुपविश्य किमप्याभाषमाणाऽवर्तत । अन्तराऽन्तरा तयोः संलापं प्रतिबध्नन् वत्सो मुरारिरात्मानं प्रीणयति स्म । तस्मिन्नेव दिने नीलया तत्रैवाभावि । वक्ष्यमाणेन विधिना प्रायेण साऽत्यवाहयद् दिनमखिलम्—

महति प्रत्यूषे मुक्तशय्या सा निर्मलीकृताभीष्टगोयुगलशाला, गङ्गाजलकृतस्नाना समानीतैकपानीयकुम्भा पूजितकुटिकागतनिजदैवता यामं यावद् बहिः पर्यटति स्म । नासीत् कदाचिदपि विनिश्चितं स्थानं तस्याः पर्यटनस्य । न केनापि कर्हिचिदज्ञायि कदेयं क्व गमिष्यत्यागमिष्यति वेति । परं यत्र कुत्रापि गताया अस्याः पक्षिण्या इव सायं घोषनिलयनिवासः प्रायो न व्यहन्यत । एकमेवासीद् गृहं नवलपुरे यत्र नीलया निशायामपि कदाचिदस्थीयत । तच्च नगरश्रेष्ठिनोऽग्निवर्णस्य । तस्य भार्या भवानी नीलाया अकारणसखी जज्ञे । क्रमेण तस्याः स्नेहो वत्समुरारिहेतोर्दार्ढ्यमापन्नः । तस्य चैवं कथाऽकथ्यत समासतः—अबहुदिवसात् प्राक् सह नद्याः स्रोतसा वहन् कोऽप्यनपगतजीवितो विलोलालको बालको नीलयाऽऽलोक्य झटिति समादाय भवान्यायदीयत । तस्यैवाभिधानं मुरारिरिति । अग्निवर्णगृहे स भवान्याऽनुपजातसंतानया स्वपुत्रनिर्विशेषं परिपालितोऽवर्धत । नैकमपि दिनमदृष्टमुरारिमुखया प्रायोऽस्थीयत नीलया । अतः कदाचिद्भवान्या निर्बन्धेन कदाचिच्च मुरारेर्वात्सल्येन मुहुस्तत्रैव सा निशामतिवाहयति स्म । एवंविधमेव कमपि व्यतिकरमधिकृत्याद्य

भवान्या निलये निवसन्ती नीला रुद्रभटाग्निवर्णयोरागमनसमये सह सख्या भवान्या संलपन्ती प्राङ्गणे तस्थौ ।

दूरादेव रुद्रभटाग्निवर्णयोरागमनं विज्ञाय झटिति समुत्थिते ते अन्तर्गृहं प्राविशताम् । तावपि चोभौ सोपानमार्गेण शिरोगृहमारुह्य घटितकपाटौ तत् स्थलं निर्जनमुत्प्रेक्षमाणौ मिथो वक्तुमारभेताम् । तदानीमेव भृत्यसाद् विधाय मुरारिमपरेण सोपानमार्गेणाकृतशब्द-मधिरुह्य पक्षद्वारयोरन्तिकोपविष्टे ते उभे विश्रब्धं शृणुत आलापमात्मन इत्येताभ्यां नांशतोऽप्यशङ्क्यत ।

रुद्रभटो वक्तुमारेभे—"मादृशे सुहृदि ते सख्यभुवि वर्तमाने त्वया निःशब्दं सोढव्या दुःखावेगा इति न मे समुचितं प्रतिभाति । विषण्णं ते मुखमालोक्य नाहं पारयामि निरोद्धुं दुःखमात्मनः । अन्योन्य-चिन्तापनयनमेव यथार्थं कर्तव्यं मित्राणां यथार्थानाम् । अन्यथा कोऽर्थो मित्रेण स्नेहेन वा ? । अतो निःशङ्केन मनसा ब्रूहि मां निखिलं ते निदानं दुःखस्य " ।

अग्निवर्णः प्रोवाच—श्रूयतां सखे, कथयामि ते । प्रभूता दिवसा एवं मे दुःखितस्य । संप्रति प्रातः समुत्थित एवाहं मे भार्या च प्रतिदिनं नगरे सर्वतः संचरतां तेषां बौद्धभिक्षूणामभद्राणि तानि मुखानीक्षावहे । तेन चामङ्गलदर्शनेन सकलमप्यावयोर्दिनं सपरितापं जायते ।

**रुद्रभटः**—अमङ्गलं दर्शनं बौद्धभिक्षोरित्यवितथम् । परं किमर्थं ते परितापः ? ।

**अग्निवर्णः**—विदितपूर्वमेवैतद् भवतो यदनपत्यतासंभवेन संतापेन संतप्तहृदयया मे भार्यया भवान्या प्रायेण सर्वदा शयनतलकीलितयैव स्थीयत इति । केनापि नूतनेन विधिना भवानीं पुत्रहेतोः प्रीणयितुं प्रत्यहं चिन्तयन्ती सा प्रातरेव बौद्धभिक्षोर्दर्शनमनिमित्तपिशुनं विज्ञाय भूयो

विषण्णमानसा संकल्पं परित्यजति। तस्या विनोदाय नवनवां युक्तिं प्रतिदिनं प्रयुञ्जानोऽप्यहमेतेषां बुद्धभिक्षूणां दर्शनेनालब्धफल एव। अपहरतीव निखिलामपि शरीरगतां शक्तिं मे भार्याया दर्शनं भिक्षूणाम्। दर्शनानुपदमेव सकलमपि दिनं तस्या दुःखायते। तस्याश्च दुःखेन ममापि चेतसा सविषादेन भूयते। न ज्ञायते कथमियं संतीर्येतापन्मयेति।

**रुद्रभटः**—अग्निवर्ण, वयमेवात्र दोषिणस्तत्किमन्येषामुपालम्भेन?।

**अग्निवर्णः**—कथमिव?।

**रुद्रभटः**—वार्धक्यव्याकुला संप्रति मतिर्नो महाराजस्य धर्मध्वजस्य। अनेनैवैतेषु वितीर्याश्रमं सनातनवैदिकशाक्तधर्मस्य समुच्छेदनं समारब्धम्। राजाज्ञयैव पूर्वमासीन्निषिद्धः प्रवेशोऽत्र नगरे भिक्षूणाम्। संप्रति पुनः सकलमपीदं भैरवपुरं बहिरन्तर्व्यापृतमिवालक्ष्यत एभिः। 'राजा कालस्य कारणम्' इति यदुच्यते तदवितथमेव।

**अग्निवर्णः**—को गुणः केवलं राज्ञ उपालम्भेन?। न राजोपालम्भः परिहरेदापदमस्मदीयाम्। तद् वयस्य, ब्रूहि कमपि प्रतिकारमनुरूपम्।

**रुद्रभटः**—किं प्रतिकारम्?। अस्त्येवात्र प्रतिकारः। न केवलं तव कृते परं निखिलस्यापि शाक्तधर्मस्य कृते स मयाऽस्ति संकल्पितः। कथमिव मादृशः शाक्तधर्माभिमानी समीक्ष्य समुच्छेदनं शाक्तधर्मस्य शयानो वर्तेत। वाक्प्रसंगेनैव ते निवेदयामि यदहमपि गृहीतबौद्धधर्मसमुन्मूलनदीक्ष एव। केवलं मयाऽपेक्ष्यते साहाय्यं भवतः।

**अग्निवर्णः**—परं कथमावां शक्नुयाव प्रतिकूलमाचरितुं राज्ञो धर्मध्वजस्य?।

**रुद्र०**—नाम्नैव स केवलं धर्मध्वजः । बौद्धधर्मपक्षपातिना सनातनधर्मविध्वंसकेनानेन नगरेऽत्र सन्ति निर्मिता असङ्ख्या रिपव इति नास्य विदितम् ।

**अग्नि०**—रिपवोऽपि किं प्रतिकूलमाचरितुं राज्ञः शक्नुयुः ?

**रुद्र०**—यदि स साम्ना स्वारंभान्न निवर्तेत । ततस्ते राज्यक्रान्तिमाचरेयुः ।

**अग्नि०**—( सभयम् ) किं राज्यक्रान्तिम् ? ।

**रुद्रभटः**—आम् । राज्यक्रान्तिम् । काऽत्र ते भीतिः ? । भवतु । एष मे निश्चयः । अमंगलदर्शनेनात्मनस्त्वां पीडयन्तं भिक्षुगणं दण्डयित्वैवाद्य संकल्पितं कार्यमहमारभे । नैतैर्बौद्धभिक्षुभिः केवलो बाधितः शाक्तधर्मः परं सर्वेऽपि दूषिताः सनातना धर्मा वैदिकाः । न वेद्मि कदैतान् वारयिष्यत्यादिमाया चण्डिका । अथवा विना यत्नात् कथमियं साहाय्यतामेष्यति मानवानाम् ? । यदि नरस्तां प्रणमेत् तर्हि साऽपि सानुग्रहा स्यात् । परं ब्राह्मणधर्म एव संप्रत्यतत्त्वः । वयमेवात्र निदानतां यामः । न वयमाचरामः कात्स्न्र्येन शाक्तविधीन् आचार्यकथितान् । नष्टप्रायाः संप्रति संस्था यज्ञानाम् । नरा अपि पुरा बलिदाने निःशङ्कमुपायुज्यन्त । तेन धर्मभावनायास्तैक्ष्ण्यं पर्यैक्ष्यत देवताभिर्मानवानाम् । संप्रति दयाधर्ममुपदिशन्ति शत्रवः शाक्तानाम् । तेन च विमोहिताः केचिदस्मदीया बलिदाने कर्तव्ये किमप्याचरन्तो वञ्चयन्ति देवताः । केचित् पिष्टपशून् विदधति । अन्ये केवलमसिधेनुकां पशुकण्ठे निधाय तं सजीवं विसृजन्ति । कथमयं विधिः प्रीणयेत् देवताः । न बलिदाननैवेद्यः स्वयमद्यते देवतया । परं पशुवधो नरवधो वा नराणां निःस्वार्थतैकद्योतको वैदिको विधिरित्यस्ति विहितः । माङ्गलिकोऽयं कालो बलिदाने हतस्य पशोः । आत्मा हि तस्य प्राप्नोति गतिमनुत्तमां स्वर्गलोके । पुनर्जन्मावसरेऽपि स कस्यापि त्वादृशस्य

भाग्यभाजः श्रीमतः पुत्रतां याति । एवं सर्वेऽपि जायन्ते सिद्धिभाजः । तुष्यन्ति देवताः । प्राप्नुवन्ति प्रभूतं पुण्यं यजमानाः । आसादयन्ति च दिवं बलिहतानां पशूनां जीवात्मानः । वैदिकात् कालात् प्रवृत्तमेनं सुपथं वयं शाक्ता एव संप्रत्यनुसरामः । शिथिलीकृतधर्मबन्धनैरन्यैस्त्वयं त्यक्त एव । संप्रति च शाक्तधर्मीयो नृपोऽपि बौद्धधर्मे स्निह्यतीति परेऽपि नराः स्वीयानाचारान् विजहति । महाकालीमन्दिरेऽस्मदीये त्वादृशैर्मादृशैरेव कतिपयैः सामान्यधनैर्जनैर्बलिदाने कतिचित् समर्प्यन्ते संप्रति पशवः । न प्रभवन्ति दातुं पशून् निर्धना धनाभावात् । नेच्छन्ति दातुं पशून् धनिनो विद्वेषात् शाक्तधर्मस्य । एवमुभयतो बाध्यते धर्मः शाक्तानाम् । बलिदानसाधनं धनं धर्मधीश्चेति द्वयं क्वचि-देव त्वादृशि कस्मिंश्चिज्जागर्ति । भाग्येनैव भार्याऽपि ते भर्तृवद् धर्मनिष्ठा । परमहो वैचित्र्यं लीलाया ईश्वरस्य यदेतादृशेन धर्मनिरतेन पतिपत्नी-युगलेन भाव्यमपुत्रेणान्येन च दूरीकृताचारेण वर्तितव्यं बह्वपत्येनेति "।

एवं ब्रुवतोरेतयोरन्तिक एव भवनस्य धर्मसाधननिर्गतानां भिक्षूणां तारस्वरसमाह्वानमश्रूयत । श्रुत्वैव तत् रुद्रभटाग्निवर्णौ समवतीर्य द्वारदेशमागतौ यावत्तिष्ठतस्तावदेव द्वौ भिक्षुकौ संमुखमभ्यपतताम् ।

एषाऽऽसीत् परिपाटिर्धर्मसाधनस्य भिक्षूणाम्—पीतं वासः, कक्षायां कन्था, मन्दा गतिः, सतालशब्दं प्रक्षेपः पदस्य, गृहाभिमुखं स्थित्वा क्षणं "नमो बुद्धाय" इत्यादीनामुक्तीनामुच्चैः प्रपठनं, अयाचितभिक्षायाश्च स्वीकरणम् । तथैव नैभिर्द्रष्टव्यं मुखं नराणां नापि वा गृहाणां । नैभिरादरणीयः प्रदाता नापि च तिरस्करणीयोऽप्रदाता । निःस्पृहैतादृशी वृत्तिर्न चिराद् सर्वदैव विमोहयति मनो मानवानाम् ।

पुरतो गृहस्याग्निवर्णस्याद्य स्थितयोरेतयोर्भिक्षुकयोः सत्यपि साधर्म्ये वयोवेषयोराकृतौ प्रकृतावपि च नासीन्मनागपि सादृश्यम् ।

एको जीर्णमन्युर्नाम निस्तेजास्तरलनयनो युवाऽक्षीणशक्तिरीषत् कुब्जकायोऽलक्ष्यत । अन्यो भिक्षुः शमधनः परिचितपूर्व एव वाचकानाम् । पीनाङ्गः प्रशान्तस्थिरदृष्टिः सनिश्चयमना दीप्ताननोऽयमशोभत । यौवन एव विहाय सर्वान् कामानूरीकृतान्त्याश्रमोऽयं भिक्षुयुवा धर्मसाधनसमुद्यत इति कोऽन्यो राष्ट्रहितं समाजहितं वा चिन्तयिष्यतीति मन्यमानास्तमालोक्य बहवो विषेदुः ।

इति षष्ठः परिच्छेदः

# सप्तमः परिच्छेदः ।

## ( कलहः )

**अस्मद्द्वेषं दिशि दिशि जनान् पाठयित्वा, महीपाद्**
**हृत्वाऽनल्पं धनमिह मिषाद् भुङ्क्थ भोगान् विहारे ।**
**यूनः शाक्तानपि च मृदुभिर्वञ्चयित्वा वचोभि-**
**र्बौद्धाचारग्रहणमनसस्तान् कुरुध्वे हताशाः ॥ १ ॥**

द्वारान्तिक एव वर्तमानयोस्तयोरभिमुखमागत्य रुद्रभटेनाभाणि— " किमरे भिक्षुकाः, किमेतदारब्धं भवद्भिः ? । किमत्र नगरे युष्माभिरट्यते सर्वत्र ? " इति ।

तच्छ्रुत्वा तयोरेको जीर्णमन्युरवोचत्—आः किं वयं याचकाः ? । सद्धर्मप्रचारका वयं बौद्धाः । येऽत्र सन्त्यधर्मनिरता भवादृशाः शाक्ता नागरास्तान् सन्मार्गं दिदर्शयिषवो वयमीश्वरप्रचोदिता एव नगरे गृहाद् गृहं भ्रमामः । अस्माकं मनांसि द्योतयता धर्मेण नांशतोऽपि स्पृष्टानि भवतां शाक्तानां मानसानीति सुतरां दोदूयन्ते नो हृदयानि ।

एवं भाषमाणं जीर्णमन्युमन्तरा निरुध्य शमधनोऽब्रवीत्—" मैवमुद्दामवृत्तिना वर्तितव्यं भवता नागरैरेभिः । रमणीयोऽयं कालः प्राभातिकश्चेतसः शान्तिं तुष्टिं च संपादयितुमुपदिशति । सर्वेष्वपि वितीर्णैव धर्मधीरीश्वरेण । यथाऽस्माकं धर्मधीरस्मदीया तथैव तेषामपि तदीया । यथा वयमनुगृहीता ईश्वरेण धर्मविषये तथा तानपि न स किं कदाचिदनुग्रहीष्यति ? । इष्टधर्मोपदेश एव नः कर्तव्यमत्र नगरे । तत् कुर्वद्भिः किमित्यस्माभिः परान् हीनतामापाद्योपशमश्चेतसो हातव्यः स्वकीयः ? । किं न ते श्रुतिपथमवतीर्णं यद् ह्य एवोपदिष्टं मात्राऽवलोकितया ? " ।

**जीर्णमन्युः**—श्रुतो मया निखिलोऽप्युपदेशः। परं न जाने को दोषो दोषपक्षे स्थापने दुष्टस्येति। भूतदयाविहीनान्येव मानसान्यत्र नागराणां निखिलानाम्। बलिदानादिकानेतेषां दारुणतरानालोक्य तांस्तान् दुराचारान् न मे मनसा पार्यते स्थातुं विना मन्युम्।

**शमधनः**—सखे, येऽस्मानेवमुपकुर्वन्ति भिक्षया तेषामेवमवमाननं नोचितम्। मौनमेव भूषयतितरामुपशमं यथार्थम्।

**जीर्णमन्युः**—अहो वैदग्ध्यम्। किमेतद् विपरीतमुपदिश्यते?। विना प्रस्फुटान्निषेधादधर्मरुचीनामेतेषां शाक्तानां मनोभुवि न मनागप्यास्पदं लभेत सद्धर्मोपदेशः। यथा तथा भवतु माताऽवलोकिता। 'मा याचत' नाम 'भिक्षां देहि' इति नास्माभिर्वाच्यं बौद्धधर्मनियमात्। एतावानेव निर्बन्धो धर्मस्य नः। परमुपदेशदाने नोपदेशकरुचिं निबध्नाति नो धर्मः।

एतदाकर्ण्यैव बद्धपरिकरो रुद्रभटोऽग्रतो भूत्वा सरोषं पप्रच्छ—"किमरे दाम्भिका धर्मकञ्चुकप्रवेशिनो भिक्षुकाः, कान् वृथाधर्मनिरतान्?। कथं तानेव निन्दथ येभ्यो भिक्षामाप्नुथ इति?।"

**शमधनः**-उपासक, अलं कोपेन। नास्माभिर्भवान् निन्दितः। स वाऽहं वाऽस्मदीया अन्ये धर्मबांधवा वा भवन्तु भवता निन्दिताः। न कोऽप्यत्र भेदः। या तेषां निन्दा सैवास्माकमपि। यदाचरन्ति ते तदेव वयमपि। अतो यदि ते निन्द्यास्तर्हि वयमपि तथाभूता एव।

**रुद्रभटः**—न वयमस्मदीया बान्धवा वा दूषिता भवद्भिः?। भवत्वेतद्। अन्य एव भवद्भिर्दूषिता इति ज्ञातेऽपि किं यूयं निरागसः?। केन यूयं नियुक्ता अधिकारेऽन्येषां भर्त्सनस्य?। अतीव मत्ता यूयं संप्रति पीतवाससो मुण्डिनः। परिहितपीतपरिधाना मुण्डितमुण्डा यूयमात्मानमन्यदूषणेऽधिकृतान् गणयथ। यद्येवं भूयो भणिष्यथ तदसंशयं

मुखस्थितान् आत्मनो दन्तान् करगतान् करिष्यथ । रक्षणीय आत्मा भवद्भिरापदोऽस्या इति पूर्वमहं वो बोधयामि ।

**शमधनः**–भद्र, किमेवमस्मान् भेषयसि ?। नैवं भाषितव्यं जीर्णमन्युना । अतस्तदपराधस्य कृतेऽहं त्वां क्षमां याचे ।

**जीर्णमन्युः**–शमधन, किमर्थं त्वं क्षमां याचसे ?। कर्तितघर्षित एव काष्ठे वर्णः स्थायी भवति । मृदुभिरेतादृशैरालापैः कथमस्माकमुपदेशो लभेत स्थानं हृदयेषु शाक्तानाम् ? । दर्शनीया एव तेषां दोषा वचोभिः समुचितैः। सत्यमेव भाषमाणेन मया किं तेषामपराद्धम् ?।

**रुद्रभटः**–किमुच्यते किमपराद्धं इति ?। किमिव नापराद्धम् ?। शाक्तधर्मोन्मूलने बद्धपरिकराः सर्वे यूयं बौद्धजनाः । अपनीता भवद्भिर्धर्मरुचिर्यूनामस्माकम् । अपहृता शोभना भूमिर्नगरस्य स्थापिताश्च तत्र विहारा आत्मीयाः । स्वीकृता उपहाराः श्रीमद्भ्यः । विमोहितोऽस्माकं महीपः । नियन्त्रिताः स्वीये कपटजाले मुग्धमतयो जना अस्मदीयाः । उन्मत्तीकृता अस्माकं युवानो दर्शनेन युष्मद्विहारगतानामङ्गनानाम् । तत्र तत्र निरुध्य धर्ममस्मदीयं प्रवर्तितः स्वीयः सावेगम् । एभिराचरितैर्भवद्भिर्हृदयमेव चूर्णितं नो धर्मस्य । एतेषां च युष्माकमपराधानां कृते किमित्यस्माभिरपि न चूर्णितव्यानि वो हृदयानि ?। कियन्तोऽतः परमपि सोढव्या वोऽपराधा अस्माभिः ?।

**अग्निवर्णः**–एतदपराधोपेक्षणं नाम भस्मीकरणमेव नः सुखानां सांसारिकाणाम् । कथमेतदस्माभिरनुष्ठीयेत ?।

**रुद्रभटः**–वयस्य, अग्निवर्ण, किमेभिः सह वृथा वाक्कलहेन ?। एषोऽहमद्य प्रभृति बद्धपरिकरः समुन्मूलनाय धर्मद्रोहिणामेतेषां बौद्धानाम् । साधु संपन्नमेतद् यदेतौ क्षुद्रपुरुषावावयोः करगतावद्य । एतौ दण्डयन्नेवाहमारभे धर्मकार्यं मामकीनम् ।

एवं भाषमाणो रुद्रभटो दक्षिणेन पाणिना शमधनं वामेन च जीर्णमन्युं जग्राह । तदा शमधनोऽमुक्तधृतिरेव गभीरमवादीत्– "भद्र, अपि धर्म्यमेतद् वृथा संक्रोधनं धर्षणं वाऽन्येषाम् ? । कथय केनास्मदीयेनाचारेण पीडिता भवन्तो येन न वयं भूयस्तदाचरेम । परपीडापरिहारमेव नो धर्मोऽस्मानुपदिशति । किमेवं वृथा कोपेन ? ।

एतदाकर्ण्याग्निवर्णः पुरो गतो भूत्वाऽब्रवीत् " अहं कथयामि ते किं भवद्भिर्नानुष्ठेयमिति। एतावदेवादौ भवन्तः कुर्वन्तु यन्नानेन मद्गृहपुरोवर्तिना पथा प्रयातव्यं बौद्धभिक्षुभिर्भवद्भिः । नात्र लभ्येत भिक्षा भिक्षुणा ।

**शमधनः**–न यच्छन्तु नो भिक्षां भवन्तः । न कदाप्यस्माभिः सा प्रार्थ्येत । परं प्रतिगृहाभिमुखं क्षणमवस्थानमस्माकं धर्म एव । नास्माभिः स परित्यज्येत । यस्य कस्यापि गृहस्य परिहारेण जायमानं पक्षपातदोषं न सहते धर्मोऽस्मदीयः ।

**आग्निवर्णः**–अये, मुण्डितमुण्डस्यैतस्य ते श्मश्रुहीनस्य मुखस्य न दर्शनमनुमन्यतेऽस्माकं धर्मः । न वयं वो विहारमुपेत्य युष्मान् पीडयामः । तत्किमिति भवन्तोऽस्मान् पीडयन्ति दर्शनेनात्मनोऽमङ्गलेन ? । नैतदभद्रं वो दर्शनं मह्यं मे भार्यायै वा रोचते । अतो यदि नाभिमतो युष्माकं क्षोभोऽस्मदीयस्ततः श्वःप्रभृत्येव परिहार्योऽयं पन्था भवद्भिः ।

**जीर्णमन्युः**–पश्य कथमन्याय्यमेतस्य वचः । किं वयं कर्हिचिद् युष्माकं गृहं प्रविशामः ?। चरणनिहितदृष्टयो वयं राजमार्गमनुसरन्तो धर्मं साध्नुमः । न किं सर्वेषामपि समानैव प्रभुता राजमार्गे ? ।

**रुद्रभटः**–आः वयस्याग्निवर्ण, शृणु राजाश्रयोन्मत्तानामेतेषां मुण्डिनामालापान् । मौर्ख्यमेवैभिः सह सामवादः । न तुष्यन्ति चर्म-

काराणां देवताः कुसुमैः । उपानत्पूजनमेव प्रियं तासाम् । तेनैव पूजनेन ताः प्रसीदन्ति । भवतु । किं ब्रूथ यूयं राजमार्गोऽयमिति ? । यथाऽत्रत्यो राजाऽस्मदीयस्तथाऽयं राजमार्गोऽप्यस्मदीय एव । एनमतिक्रम्यास्मानेव निन्दतां बौद्धभिक्षूणामतः परमेतादृशी सत्क्रिया स्यात्—

इति वदतैव रुद्रभटेन विहाय पाणिं शमधनस्य बध्दमुष्टिना पृष्ठे जीर्णमन्योः प्रहर्तुमारभ्यत । जीर्णमन्युरपि निमीलितनयन ऊर्ध्वपाणिः प्रतिप्रहारं—" नमो बुद्धाय, बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, संघं शरणं गच्छामि," इत्यादीनि वचनानि प्रतिप्रहारं तारस्वरेण प्रपठन्नकृतप्रतिकार एव तस्थौ ।

स्वस्थानादचलन्नेवाग्निवर्णः " साधु कृतं रुद्रभट, साधु कृतम् " इति तं प्रोत्साहयति स्म ।

अमुक्तसौम्यभावः शमधनो भूयः सानुनयं रुद्रभटमवादीत्— " धर्मबन्धो, मुञ्च हस्तं जीर्णमन्योः " । एतदाकर्ण्य तावत् संवृद्धकोपो रुद्रभटः सावेगमभाणीत्—" मा मां भण धर्मबन्धुम् । नाहं ते बांधवः सधर्मा । अयमधमः स्यात् ते धर्मबन्धुः । नाहम् ।

**शमधनः**—भवतु । न भवान् मे धर्मबन्धुर्नाप्यहमत्रभवतः । परमबन्धुभिरपि किमर्थमेवमहेतुकं योद्धव्यम् ? । "

एवमनुनयत्यपि शमधने न रुद्रभटो व्यरमत् प्रहारादारब्धात् । ' नमो बुद्धाय ' इति वदन्तं अकृतप्रतिकारं सहमानमालोक्य जीर्णमन्युं शमधनः समुपेत्य वामेनात्मनः पाणिना दृढं निरुध्य रुद्रभटं जीर्णमन्युं मोचयन्नवादीत्—"गच्छ जीर्णमन्यो पुरो धर्मसाधनाय । पश्याम्यहं कथमयं त्वां भूयः प्रहरिष्यति मां वा निरोत्स्यतीति । आचर स्वेच्छया धर्ममात्मनः । अहमप्यचिरादनुपदमागत एव । तद् गम्यताम् ।

मोचितमात्मानमालोक्य मुदितमना जीर्णमन्युः पुरः प्रतिष्ठमानोऽप्यलुप्तभीरितस्ततः सभयमालोकयन्नचलत् ।

इतो रुद्रभटकरयुगं तथा रुद्धवान् शमधनो वामपाणिनाऽऽत्मनो यथा स यतमानोऽपि न शशाक तद् मोचयितुम् । अतो नानुसृतवान् स जीर्णमन्युम् । तथा स्थित एव स केनाप्यनिरुद्धेनात्मनो मुखेनाग्निवर्णमधिकृत्योच्चैर्जगाद—"किमेरं भ्रान्त इवेक्षसे तत इतः ? । रुद्धगतिरहमनेन नराधमेन । तदेहि मां मोचय, अन्यं वा तं प्रयान्तं नरकीटमाभूपातं ताडय" इति ।

महाबलमालोक्य शमधनं समुज्झिततत्प्रतिकारकल्पनोऽग्निवर्णोऽन्यं तत्सहचरं जीर्णमन्युमपकारसमुचितं मन्यमानोऽञ्जसाऽनुधावनपरो रुरोध । न स सहसैव तं ताडयितुमुदसहत ।

तत्समीक्ष्य रुद्रभटो मुक्तकण्ठमगदत्—"साधु कृतम् । ताडनेऽक्षमोऽपि भवांस्तं तथैव रुद्ध्वा तिष्ठ । अहमस्य दुरात्मनो दर्पं शातयित्वाऽऽगत एव" इति ।

एतदाकर्ण्य प्रकटितमन्दहासः शमधनः प्रोवाच–" किं त्वं मे दर्पं शातयिष्यसि ? । प्रकटीभूतैव ते शक्तिरत्र विषये । तदलं प्रलपितैः । यद्यहमधिकतरमुपयोक्ष्ये बलं ते करयुगे तद् रुधिरं बहिर्गतं दर्शयिष्ये । परं नाहं तथा कर्तुकामः । न वयं बौद्धाः शान्तिप्रिया असामर्थ्यात् । सात्त्विकतया मनसः शान्तानि नो भिक्षूणां शरीराणि । किं नाद्यापि वचसि मे प्रत्ययस्ते ?"।

अत्रान्तरेऽन्यत्र संक्रुद्धं चेतसाऽग्निवर्णस्य । रुद्धगतिर्हि जीर्णमन्युः स्वयं प्रतिकारासमर्थोऽपि नातिष्ठदकृतप्रलापः । अयथातथैर्वचोभिर्न केवलमग्निवर्णं परं सकलमपि शाक्तगणं शाक्तधर्ममपि च तथाऽगर्हयद् यथा प्राक् ताडनपराङ्मुखमना अप्यग्निवर्णोऽधुना जातमन्युरेनं रुद्रभट इव मुष्टिना प्रहर्तुमारेभे । जीर्णमन्युश्च यथापूर्वं "नमो बुद्धाय, बुद्धं शरणं गच्छामि, धर्मं शरणं गच्छामि, संघं शरणं गच्छामि" इत्यादीन्यारटन्नात्मनो निर्ह्रीकतां निःसारतां च दर्शयंस्तस्थौ ।

तद् दृष्ट्वा शमधनः स्वस्थानस्थित एवोच्चैरवादीत्–" धर्मबन्धो, किमेतदनुष्ठीयते त्वया । मैवमात्मनो दुर्बलतां दर्शयन्, भगवतो बुद्धस्य चाभिधानमुपहास्यतां नयन् नयनयोस्तावत् मार्गे चिरं वर्तेथाः । हस्तहीनोऽपि भवान् सचरणः । तदुपयुज्य पादावात्मनो भव कथमपि दृष्टेरगोचरो मे । अक्षमोऽस्म्यहं ते विलोकयितुमिमां दुर्बलताम् । पश्यैकेनैव पाणिना पाण्योर्गृहीतोऽयं ब्राह्मणो मया स्थाणुवन्निश्चलतां नीतः । एवं कुर्वाणोऽप्यहमक्षीणशान्तिरप्राप्तमन्युश्चेति यथाऽयं जानीयात् तथा तिष्ठामि " ।

तच्छ्रुत्वा रुद्रभटोऽभाणीत्–" अहो शंसनं शान्तेः सामर्थ्यस्य चात्मनः । कथं न स्यात् सबलस्ते कायः ? । निखिलं पुरं पर्यटन्तः प्रपूरितकन्थाः आकण्ठं नवनवान्यन्नानि स्वादमाना निरुद्यमा निश्चिन्ताः क्षपयथ कालं बौद्धा यूयं भिक्षुकाः । न युष्माकं वृत्तिर्न धर्मः । देवताविसृष्टश्चतुष्पथविहारी वृषभ इव तुन्दिलो मदोन्मत्ता यूयं भिक्षवः । पश्य स महाङ्गो भिक्षुरपरस्ते सहचरः । लीलया सहते स मुष्टिप्रहारानसङ्ख्यान् । मांसपूर्णे हि काये कुतः संभवो व्यथायास्ताडनेऽपि । बुद्धाभिधानं कीर्तयन्नसौ ताडनपरं तमग्निवर्णं मार्दंगिकमिव वेत्त्यपीडः ।

न पीडयति ताडनं नरानिति यदि ते समुद्गश्चेतसितदहं शक्तस्त्वां दर्शयितुं कियत् प्रपीडकं ताडनं नराणामिति । अव्यापृतो मे पाणिर्दक्षिण इति ते प्रत्यक्षमेव । अलमेकोऽपि मुष्टिप्रहारस्त्वामत्र शाययितुम् । परं सात्विकं नो मनः । सात्विकेनैव भाव्यं सर्वदा मनसाऽस्मदीयेनेति नो धर्मगुरोरुपदेशः । अतः स्वरक्षार्थं यतमाना अपि वयं नावश्यकादधिकतरं कर्हिचिद् बलमुपयुञ्ज्मः । अत एव भवानद्य सजीवः । गर्हय यावदिच्छं वचोभिरश्लीलैराननेनात्मनो नो बौद्धान् । समर्था वयं सोढुं गर्हणां भवादृशानाम् । तथा च प्रतिप्रहारस्यापि क्षमाणि नः शरी-

राणि । किन्त्वेवं ग्राम्यवत् संप्रहारसमाचरणे लघिमानमुत्प्रेक्षते नो मनः।

निजमाहात्म्यवर्णनव्यापृतं विलोक्य शमधनं रुद्रभटो मुमुक्षुः साकूतमगदत्–"एवं करनिपीडनमन्येषां न भिन्नं संप्रहरात्। किमेतामेव सात्विकतां शान्तिं वा ऽऽकलयसि। यदि परमार्थतः शान्तिपरं ते चेतस्तत्किमेवं प्राणापहारिणीं जनयन् वेदनां निरुणत्सि मे पाणि-युगलम्?।

शमधनो विहस्य प्रोवाच-"वेद्म्यहं सम्यक् ते युक्तिवादम्। नैवं त्वं युक्तिवादेन मां वञ्चयितुं प्रभवेः। शान्तिं सात्विकतां चाध्या-पयता गुरुणा मे तयोरवधिरप्युपदिष्ट एव। तमवधिं मनसि भावयतैव मया निरुद्धं ते पाणियुगलम्। न मया भवांस्ताडितः। अपकारचिकीर्षया न वयं कदापि भवामः समुद्यताः पीडनायान्येषाम्। अन्याय्याचरण-प्रतिकारान्नवारयत्यस्मान् धर्मोऽस्मदीयः। आसमहं त्वां केवलं प्रथमं प्रतिबध्दुकामः। विदितमद्धृदयभावो यदि भवांस्तूष्णीमस्थास्यत् तर्हि नैतत्ते करयुगं दृढनिरोधनवेदनामन्वभविष्यत्। अतो भवानेव निदानमेतस्य नाहम्। विवेकपथानुसारिणी मे धीस्तथाऽऽचारोऽपि। साधु संपन्नमिदं यद् भवान् मे पाणिपाशनियंत्रणामिमां संप्राप्तः। विदितोऽधुना ते बौद्धधर्मप्रशान्ततताया अवधिः। मौर्ख्यमूलां यदि निरवधिकां शान्तिमङ्गीकृत्य वयं सर्वदा विना प्रतिकारं तिष्ठेम तदस्म-द्विपक्षा विहारादीनस्मदीयानकालहीनं शून्यतां नयेयुः। अतो निजरक्षणावश्यकं शारीरं बलं सर्वदा वयं योजयामः"।

इत्याभाष्य, अग्निवर्णपाणिभ्यां कथमप्यात्मानं मोचयित्वा पलायितुं जीर्णमन्युं विलोक्य शमधनो निरुद्धं रुद्रभटभुजयुगलं मुमोच। ततश्च यथापूर्वं नयनाग्रनिहितदृष्टिः प्रतिगृहाभिमुखं क्षणमवस्थितो 'नमो बुद्धाय' इत्यादीनि पठन् शान्तमना धर्मसाधनमाचरन्नग्रतः प्रययौ।

एवमवसितोऽसौ कलहो जीर्णमन्योः पलायनाद् रुद्रभटस्य च मोचनात् । असहायमपि शमधनमधुना न रुद्रभटाग्निवर्णौ विदितबलौ पीडयितुमुदसहेताम् । अतो दूरगतमेनं विनिश्चित्य वदनविकारैः, हस्तकम्पनैः, नयनपृथूकरणैः, श्मश्रुसमुल्लासनैश्चात्मनः क्रोधप्रतिकारमाचरन्तावेतौ शाक्तवरावगतिकतया कथमपि मनःस्वास्थ्यमाकर्षताम् ।

समुल्लङ्घितनयनपथे शमधने शाक्तावेताग्निवर्णभवनं विविशतुः । तत्र च भवानी सचिन्ता स्वस्थाननिश्चलाऽलक्ष्यत । अद्य हि बौद्धभिक्षोरनिष्टं दर्शनं तया लब्धमेव । अपि चानेनान्योन्यकलहदर्शनेनाक्रान्तं तस्या हृदयं भयेन । अप्राप्तपीडो निवर्ततां भर्त्ता भवनमिति ध्यायन्ती सा मुरारिमन्तिकस्थं बहिर्गमनाद् बलाद् वारयन्ती सव्यकरनिहितकपोलाऽवर्तत । अप्रियाचारा अपि बौद्धाः परापकारपराङ्मुखा इति जानानाऽपि सा तमःप्रकृते रुद्रभटस्य सान्निध्यात् कथं स वाक्कलहः परिणंस्यतीत्युत्प्रेक्षमाणा क्षणे क्षणे चिन्तापराऽजायत ।

गृहप्रतिनिवृत्तयोस्तयो रुद्रभटो भूयो भाषितुमारेभे । काम निन्दितस्तेन बौद्धानां नूत्नो धर्मः । गर्हितास्तेषामाचाराः । अन्ततश्च वयमेवात्र विषये दोषिण इति निष्फलं गर्हणमन्येषामिति तत्त्वमाश्रित्य तेनात्मा मनस्तापान्मोचितः । पुनः स शाक्ताचारमुद्दिश्यावादीत्—"न संप्रत्युपास्यन्ते देवताः शाक्तैः । तिरोभूता यज्ञाः । अल्पतां गताः पशुवधाः । स्मृतिशेषा नरबलयः । एवं सर्वतो धर्मपराङ्मुखाः शाक्ताः परिभवभाजनीभूता इत्यत्र नास्ति किमपि वैचित्र्यमित्यादिकं वदन् प्राप्तपरमेश्वरचोदन इवोर्ध्वदृष्टिः समुद्यतपाणिस्तारस्वरेणावादीत्—"अस्त्वेवम् । शाक्तधर्मसंस्थापनाय गृहीतक्षणोऽयं रुद्रभट इति जानन्तु जनाः । चण्डिकाप्रसादनाय यद् यत् सा समादिशेत् तत् तदयमाचरेत् । यान् बलीन् साऽभिलषेत् तानयं यच्छेत् । एवं कृतेऽपि यदि सा प्रसन्ना न स्यात् तदयमात्मानमपि बलीकुर्यादिति निश्चयोऽस्य ।"

इमां घोषणामाकर्ण्य मनाङ्मुदितापि भवानी भीतिग्रस्ता चकम्पे। रुद्रभटनिनादेनोत्पन्नभियं कण्ठकलितकरपाशं मुरारिं च वक्षसि निधाय पृष्ठदेशे स्पृशन्ती 'अलं भयेन वत्स' इति तमभाषत।

शाक्ताभिभाविनाऽप्यनेनाद्यतनेन व्यतिकरेणाग्निवर्णोऽज्ञासीत्—"न कलहकारिणः परं कलहपरिहारकाङ्क्षिणो बौद्धा भिक्षवः। नातस्ते निजनिलयनिकटवर्तिनाऽध्वना भूयो यास्यन्ति। तेन चात्मनो भार्या भवानी भवेद् वीतचिन्ताऽत्र विषये। परमपत्यनाशस्तस्याः कथं परिहरणीयः" इत्यविज्ञाय स भवान्याः पुर एव पुनस्तं प्रश्नमनुयुयोज। अत ईषन्निमीलितनयनो ध्यायन्निव किमपि रुद्रभटः क्षणमूर्ध्वदृष्टिरवादीत् "काऽस्त्यत्र विपद् धर्मपराणां यां न परिहर्तुं शक्नुयान्माता चण्डिका। परं नाहमत्र विषयेऽधुना स्पृहयाम्यधिकमभिधातुम्। कथितपूर्वमेव ते ह्यो मया यद् भाग्यादासादितास्ति भवता भार्या धर्मशीला। कदाचित्तस्याः परीक्षणाभिलाषिण्यम्बिकाऽधुनाऽवसितपरीक्षणा स्यात्। अतस्तस्याः कल्याणे सा मां त्वां तामेव वा न चिरात् स्वयमेव योजयेदिति प्रस्फुरति विचारो मानसे मे" इति।

एतदाभाष्य कोणैकदेशस्थापिते रजतपात्रे स्थितं रक्तचूर्णमादाय 'विजयतां माता चण्डिका' इति वदन् ललाटतटकृतललामो निरगात्।

अग्निवर्णगृहमागतं दूरादेवालोक्य रुद्रभटं नीला करगतं मुरारिमादाय सरभसमन्तर्गृहं प्रविष्टाऽऽसीत्। सह बौद्धभिक्षुभ्यां कलहाय बहिर्गतयोरेतयोः पुनरन्तर्गृहान्निर्गता सा मुरारिं भवान्याः पाणौ न्यक्षिपत्। परमूर्ध्वं कलहात् सहाग्निवर्णेन भूयो भवनं प्रतिनिवर्तमानमालोक्य रुद्रभटमञ्जसा पटान्तावगुण्ठितवदना पृष्ठदेशं वेश्मनः प्राविक्षत्। द्विरपि तमभिवीक्षमाणा संजातभीः सा तस्मादात्मानं निह्नोतुं तद्दर्शनं वा परिहर्तुं कौशलेन दूरं यातवतीति स्फुटमेव।

## इति सप्तमः परिच्छेदः।

# अष्टमः परिच्छेदः

## ( मुरारेः कथा )

**धारासारैः पुरमिदमभूदेकदाऽम्भःप्रपूर्णं**
**सङ्ख्यातीताः सह गृहजनैर्नागरास्तत्र नष्टाः।**
**दोलारूढः पयसि पतितो भाग्यतस्त्वं मयाऽऽप्तः**
**पाणौ मातुः सरभसमथ स्थापितोऽस्या भवान्याः॥१॥**

सकृदेव कलहायितमग्निवर्णसदनाग्रतः शाक्तबौद्धैस्तस्मिन् दिने यथाकथितम्। दृष्टशमधनशक्तिसारेण हि रुद्रभटेन न भूयः पीडितः शमधनोऽन्यो वा बौद्धः। नगरे सर्वत्र बहुलीभूतेन तेन कलहेन परापकारपराङ्मुखानां बौद्धानां राजमार्गगमननिरोधनं शाक्तकृतमनुचितं मन्यमाना बहवः शाक्तधर्माभिमानिनोऽपि रुद्रभटाग्निवर्णौ निनिन्दुः। तथा च बौद्धधर्मानुरागिणं राजानं विज्ञाय वृथा पीडनाद् बौद्धानां राजकोपमुत्प्रेक्षमाणाः परेऽपि नैतान् कर्हिचित् पीडयामासुः। अतो न भूय उदभवच्छाक्तबौद्धकलहो भैरवपुरे। यथापूर्वं भ्रेमुः प्रतिभवनाभिमुखं धर्मसाधनाय भिक्षवः। तद्दर्शनजातशिरोवेदनां च भवानीमालोक्य प्रतिदिनमग्निवर्णो यथापूर्वं विषण्णमना एव दिनमतिवाहयति स्म।

भैरवपुरमुपागतस्य रुद्रभटस्य दर्शनादारभ्य विमुक्तस्वैरसंचरणा नीला यत्र यत्र स जगाम तत्र तत्र प्रच्छन्नदर्शना तमनुससार। अग्निवर्णसदनागतं तमालोक्य तावत् तस्याश्चिन्ता परां भुवमुपाजगाम। अन्ततश्च दृष्टशाक्तभिक्षुकलहा, श्रुतबौद्धधर्मध्वंससंगरा सा समुत्प्रेक्ष्य रुद्रभटलीलां भाविनीं दूरीभूतहृदयशान्तिः कथं कथमप्यवर्तत।

क्वचिदेकाकिनं रुद्रभटं निरुध्य तदुदरनिवेशितासिधेयुकया स नेयः पञ्चतां पापात्मेत्यनेकशश्चेतस्युदभवंस्तस्या विचाराः । परं जिघांसाविषयीभूतो नरो यथा यथाऽधिकतराण्याचरति पातकानि तथा तथा तीव्रतरतामेति प्रतिहिंसनस्पृहा प्रतिहिंसकस्येति नियमः । अतोऽपराधिनं हन्तुकामोऽपि प्रतिहिंसकः प्रतिहिंसनं बुध्द्यैव विलम्बयति । नीलयाऽपि तथैव व्यधायि ।

एकदा भीषणमिममाशयं यदा सा नंदायै निवेदितवती तदा सैनामुपदिदेश "वत्से, रुद्रभटहिंसनेनापकारनिर्यातंन ते न्याय्यमेव । परं यथा तत्र तथाऽन्यस्यापि कस्यचिदक्षम्यमपराधमाचरन्तं तमभिवीक्ष्य स त्वया हन्तव्य इति मन्ये। तेन ह्यस्वार्थपरं गण्येत ते कार्यमबहुदोषश्च भवेत्तस्य वधः । भवतीं भ्रंशयन्तमेनं मत्करगतमहमपि दृढनिपीडितकण्ठनाला प्राणैर्वियोजयितुमुद्यता स्यां किं पुनर्भवती । परमकृतसुविचारं नार्हत्यनुष्ठानमनुष्ठेयस्य" इति ।

रुद्रभटसदृशो नराधमो यत्र यत्र संचरेत् तत्र तत्र छाययाऽस्य जीवनलतास्तत्रस्था असंशयं प्लोषमवाप्स्यन्तीति मन्यमाना नीला प्राणेभ्योऽपि प्रियतरं भवनीभवनं मुहुर्मुहुरुपागमत् । न भाव्यं कदाप्यक्षिगोचरेण रुद्रभटस्य बालेन मुरारिणेति च मनसि कुर्वाणा तदक्षिपथादेनं रक्षितुं यावच्छक्यमयतत । पुनः पुनरागमनेन नीलाया भवानी सुतरां तुतोष । संवर्धितमोदसागरो मुरारिरपि तद्दर्शनहृतहृदयः सानन्दं ननर्त ।

अद्य द्वारान्तिकमुपगतामेव नीलामालोक्यैव धावनपरो मुरारिः पाणिभ्यां तामाकृष्य बलात् पार्श्वे भवान्या उपावेशयत् तां चिबुके गृहीत्वाऽवदच्च—'अद्य युवाभ्यां मे मनोहरा कथा कथयितव्या' इति ।

शाक्तबौद्धकलहमेव मनसि भावयन्ती भवानी नीलया सह कलहकथा एव कर्तुमारेभे । धर्मनिष्ठाया अपि तस्या मृदुलतया प्रकृतेर्नासीत् प्रियः कलहः संप्रहारो वा । परं सर्वेषामपि स्वजनपक्षपातीनि

प्रायो हृदयानि । अतः सा बौद्धभिक्षून् दोषपक्षे स्थापयित्वा धर्मरक्षण-समुत्साहं रुद्रभटस्य स्तोतुं प्रावर्तत । तदाकर्ण्य नष्टधृतिर्विषण्णानना नीला तामवादीत्—“ यातु भस्मतां धर्मरक्षणमेतत् । ससर्पं ते भवनं संप्रति । पूर्वमेतच्चिन्तय ततो धर्मं रक्षणं वा ” इति ।

न भवान्या ज्ञातस्तस्या आशयः । तदा नीलया स एवं स्फुटीकृतः—“ भवानि, किं कथयामि ? त्वद्गृहस्थापितपदमेनमालोक्य रुद्रभटं कम्पितमिव मे हृदयेन ” ।

“ किमुच्यते ? सहैव मे भर्त्रा देवस्थानाधिकारे नियुक्तोऽसौ शाक्तैर्नागरैः । दूरीकृत्य ग्लानिमयमात्मनस्तपोबलेन पुनः संस्थापयेच्छाक्तधर्ममिति सर्वे विश्वसन्ति । नास्ति तस्य प्रयोजनं चिन्तया मद्गतया । तथापि मच्चिन्तापरिहरणाय स सदा धर्मपुस्तकानि विलोकयति । “ अचिरादेव कमप्युपायमन्विष्य स त्वां विगतदुःखां करिष्यति ”-इत्यहमाश्वासिताऽस्मि भर्त्रा प्राग्दिनत्रयात् । एवं स्थिते न वेद्मि कथं तच्चरणपातो मद्गृहे त्वामेवमायासयतीति । आश्चर्यमेवैतदिति मन्ये । ”

नीला प्रत्यवोचत्—“ अज्ञातविषाणां नराणां मनो मोहयतीत्थमेव व्यालः । तेजस्विनी तस्य कान्तिः, अतीव मनोहरस्तस्य वर्णः, सविनयं सविचारं च तस्य प्रसर्पणं भाति दूराद् द्रष्टुः । परं कदापि न भवत्यमुक्तजीवितो नरः पार्श्वगः । एवमेवैष यदि भवद्गृहे दत्ताश्रयः स्यात्तर्हि भवती सह भर्त्रा समीपागतविनाशैवेत्यत्र नास्ति मे संशीतिः ” इति ।

“ अहो वैदग्ध्यं ते । ज्ञातरुद्रभटचारित्रेव भाषसे । ब्रूहि तर्हि तच्चरितं येनाहं जानीयाम् । मन्येऽद्य स वराको धर्मगुरुरद्य विषयस्ते धीविकारस्येति ” ।

“ किं वदसि ? । धर्मगुरुः इति ? ” एवमुच्चारयन्ती नीला तीव्रतिरस्कृतिदर्शकं हासं प्रकटयन्त्यवादीत्—“ मन्ये निमीलितनयन एव स

देवो देवी च याभ्यामेतादृशात् कर्मचाण्डालात् स्वीक्रियते धर्मसेवा। अपि जिज्ञाससे त्वं चरितं रुद्रभटस्य ? । वेद्म्यहं तन्निखिलम्। कथयिष्येऽहं त्वां कदाचित् स्वस्थहृदया । त्वमप्यचिरादेव तदनुभविष्यसि । यदि समाश्रितप्रातिकूल्यं भवद्भागधेयं तत् कथं स्यान्मयि विश्वासो भवत्याः ? " ।

अथ मनागिवाङ्गीकृतहीनभावा भवानी बभाण—"मैवमन्यथा गृहाण । परं विनानुभवात् कथं को ज्ञातुं शक्नुयात् ? " ।

" किं कथयितव्य एव तेऽनुभवः ? " । इत्युक्त्वा यावदनुभवं विवक्षति नीला तावदेव गतधृतिर्मुरारिरतितरां कलहोद्यतो जातः । कथाकथनप्रार्थनामात्मनोऽनादृत्य नीलाऽन्यदेव किमप्यालपतीति विज्ञाय संजातकोपः स लघुनाऽऽत्मनः पाणिना पृष्ठयोरेतयोः प्रहरन् बलादेव रोदितुमप्यारभत । कथय कथां कथय कथामिति मुहुर्मुहुः स तां भूयः साक्रोशमन्वनयत् ।

प्रणयिजनाः प्रायेण स्वप्रियानादमतिभूमे रक्षितुं सन्ति सर्वदा सावधानाः । अतो भवान्यपि मुरारिव्यतिकरमेनं शोभनं कलहपरिहारोपायं मन्यमाना विहाय विषयं विवादस्यावादीत्—" मुग्धे कथय कथामेनम्। नान्यथा स्यादयं शान्तचेताः । "

स्वीकृतः पक्षो भवान्या स्वीय इति विज्ञाय मुदितमना मुरारिः कस्या आश्रयणीयोऽङ्क इति विचारेण दोलायितमतिरुभयोरपि तयोरङ्कयोरुपविश्य पाणियुगमात्मनो निधाय स्कन्धयोरेतयोरतिष्ठत् ।

अथ नीला महाश्चर्यपूर्णां, कथयितुमुद्यतामिवात्मानं दर्शयन्त्युवाच—"वत्स, श्रूयतां कथा मनोहरा—आसीदेकं भैरवपुरसदृशं महन्नगरम् । अवसत् तत्रैको महान्नागरिकः । विस्तृतं मनोहरं चाभवत् तस्य हर्म्यम् । आसीत्तस्यैको भवादृशः सुतः शोभनः । एकदा प्रावर्तत

झंझावातः। व्याप्तमम्भोदैर्नभः। दुर्दिनेनांधकारिता दिशः सर्वाः। व्यद्योतन्त विद्युतः। अगर्जन् महानादैर्मेघाः। अवर्षत् चिरं धारासारैमर्घवा। पूर्णानि पयोभिर्महाभवनानि। अवहन् सह जलेन बहून्यल्पधनानां लघूनि निकेतनानि। अथ तस्य बालस्यापि गृहं प्राविशत् प्रवाहो नद्याः। आसीत् स बालस्तदानीं सुप्त आन्दोलिकायाम्। समीपेऽवर्ततोपविष्टा तस्य जननी। सह स्रोतसा वहन्ती सा क्वचिदयात्। सहान्दोलिकया स बालो जले वहन् केनापि तीरोपान्तवर्तिना पादपेन निरुद्धगतिरवालम्ब्यत। शीतबाधितः स बालः कथमपि कष्टां तां निशामत्यवाहत्। प्रातर्मत्स्यबन्धनाय गतेन केनापि धीवरेण दृष्ट्वा स गृहमानीतः। मया च स तस्माद् रूप्यकमुष्टिना क्रीत्वा तव मात्रे समर्पितः। ततस्तव माताऽप्यहमिव तस्मिन्नस्निह्यत् तमभोजयदपोषयच्च"।

**मुरारिः**—दर्शय मे कुत्र वर्तते सः बालः।

**नीला**—अपि जानीयास्तं त्वं यद्यहं दर्शयिष्ये ?।

**मुरारिः**—बाढम्।

अथ भित्त्यवलम्बितदर्पणाभिमुखं तमानीय तत्प्रतिबिम्बं दर्शयन्ती नीला तमवोचत्—"एषोऽत्र तिष्ठति स कुमारः" इति।

आत्मन एव प्रतिबिम्बमालोक्य कलहायमानो मुरारिस्तां निषिध्यावादीत्—"किमेवं वञ्चयसि माम् ?। तं बालं दर्शय यस्य कथां कथयसि। नायं स बालः। अहमत्र वर्ते। त्वमत्र वर्तसे। कुत्र वर्तते स बालः ?।

**नीला**—अयमेव स बालः, अस्यैव कथिता मया ते कथा।

**मुरारिः**—किं ममैवेयं कथा ?। असत्यम्।

**नीला**—नासत्यं वत्स, तवैवेयं कथा। त्वमेव स बालः। न परः।

**मुरारिः**—कथं नासत्यम् ? । यद्यहं स बालस्तर्हि कथं नाहं तां नदीं स्मरामि ? ।

**नीला**—त्वं कथं स्मरिष्यसि ? । सुतरामल्पवयास्तदानीं त्वमभवः ।

**मुरारिः**—आः किमपि कथयित्वा मां वञ्चयसि ? । तिष्ठ मात्रे निवेद्य त्वां ताडयेयम् ।

**नीला**—निवेदय । समीप एवैषा तिष्ठति । अथवा त्वमेव ताडय । अतीव प्रीणाति मे ताडनं ते ?

एवं भाषमाणायां नीलायां कथामवसितां विज्ञाय वस्त्वन्तराकृष्टचेता मुरारिस्तालिकां वादयन् क्वचिदयात् । कुसुमपतगानुकारिणी वृत्तिर्बालानाम् । कुसुममभितो भ्रमन्तमालोक्य पतगं तदेकमनसं तं प्रेक्षको मन्यते । परं क्षणेनैव कर्बुरां पक्षपालीं भ्रामयित्वा स्थानान्तरगतं तमालोक्य तदेकनिष्ठतास्वरूपं वेत्ति मानवः ।

गते मुरारौ भवानी नीलामवादीत्—

" किमिति मुग्धे, मुरारिकथाकथन एवाद्य पक्षपात्यभवत्ते मनः ? । अपि कथितासीत् सा त्वया कर्हिचित् तस्य पूर्वम् ? "

" न कदापि । अहमपि न जाने कथमेषैव कथाऽद्य मे मतौ संजातेति । कदाचिदेवं स्यात् । पुनः पुनरेति संप्रति रुद्रभटो भवनं ते । तेन मुरारेः कृते सुतरां मे पर्याकुलं मनः । अतस्तद्गतैव कथा मे मतौ समुत्पन्ना " इति ।

" सत्यमेव मुग्धाऽसि । कोऽस्ति संबंधो मुरारिरुद्रभटयोः ? "

" कुदृष्टिसंबंधः । केचिन्नराधमा एतादृशीमेव कुदृष्टिं धारयन्ति यया न सह्यते कस्यापि दर्शनं शोभनस्य । तेषां दृष्टिपथमुपगतः पादपो ज्वलति, पशुः पञ्चतां प्रयाति, पात्रं भनक्ति, अन्नं गरलीभवति, एवं

नरोऽप्यन्यथाभावमुपयाति । अतोऽद्य सायं मरीचिलवणादीन्यादाय वस्तूनि कुदृष्टिपातसंजनितममंगलदोषं मुरारेरपनय "।

"अपनयेयं यदि रोचते ते । न तदंशतोऽपि पीडाकारं मे । परमिहैवाद्य वसतु भवतीति मन्ये । न जाने केन हेतुना किन्तु समुत्कठितमिवाद्य मे मनः ।

मम हृदयेनैव सह संमन्त्र्य मन्त्रयसे । किमद्यैव श्वोऽप्यत्रैव वसेयम् । तत्र मम चोत्कण्ठापनयनं यावदत्रैव सर्वदा वसेयम् । किमस्ति तत्र नंदाया घोषेऽपि मामकीनम् ? । नन्दाया दर्शनार्थमेव समुत्कण्ठिते मनस्यन्तरान्तरा तत्र गमिष्यामि "।

## – नवमः परिच्छेदः –

### ( भवानी–संकटम् )

भक्तः स्वकर्मनिरतो लभतेऽत्र सिद्धिं
प्रोक्तं स्वयं भगवता स्फुटमात्मगीते ।
त्यक्त्वा स्वधर्मविहितं बलिदानमेते
शाक्ता भवेयुरयि सौख्यभुजः कथं नु ? ॥१॥

योऽयं तिष्ठति ते भवानि पुरतो बालः प्रसन्नाकृति–
स्तन्मांसैर्यदि तोषयेर्भगवतीं तद् द्राक् सपुत्रा भवेः ।
किं भीतेव निरीक्षसे मम मुखं, नो धर्म एषोऽङ्गने
देव्यादेशत एव कथ्यत इदं कुर्यास्त्वमेवं शुभे ॥२॥

अथ कतिपयैरेवाहोभिः पण्यवस्तुसमानयनाय वाराणसीं गतेऽग्निवर्णे, प्रतिदिनप्रवृत्तनवनवोपचारपूजने भवानीभवने, पञ्चषमासदेशीयमचिरमृतमात्मनः पञ्चमं तनयं शमनभवनातिथ्यसेविनमनुचिन्त्य विषादविवशीभूतमानसा भवानी कदाचित् किंकर्तव्यमूढा निजनिलयैकदेशे समुपविष्टाऽऽसीत् । श्वोभूतायां शुक्रवासराष्टम्यां देवतार्चने के विधिविशेषा योजनीया इत्युपदिश्य संताननाशापदमात्मीयां कः कदा परिहरेदित्यधिकृत्य विषण्णमभवन्मनस्तस्याः । तथा स्थितां तां मूकीभूतामिवालक्ष्य मुरारिरभ्युपायैरनेकैः कथमपि हास्यालापपरां कारयितुं यतमानोऽपि व्यर्थश्रमोऽन्ततो लघुना करपुटेनात्मनश्चिबुके तां गृहीत्वाऽवादीत्–“ मातः किमद्यैवं वर्तसे त्वम् । किमद्य मया सह न वदसि, न हससि, न क्रीडसि, नापि च कथां कथयसि ? । किं कुपिताऽसि

मह्यम्" इति । एवं मुरारिणा बलान्मौनं त्याजिता साऽब्रवीत्–"वत्स, नाहं कुपिता ते । किं त्वयाऽपराद्धं मे येन ते कुप्येयम् ?"।

"यदि न मयि कोपस्तर्हि कस्मिन्नप्यन्यस्मिन् स्यात् । अपि सत्यमेतत् ? । कथय तत् किं केनापराद्धं त इति"।

"किं ते कथनेन ? । गच्छ रमस्व बहिर्द्वारे । अद्य बाधते मां शिरोवेदनेत्यस्म्यहमुपविष्टैवम् । नान्यत् कारणं किंचित् । त्वं बहिर्गत्वा पश्य किं तत्र मनोहरं वर्तत इति । यदि किंचिन्मनोहरं स्यात् तदागत्य निवेदय मे"।

"एवम् । परं नाहं बहिश्चिरायिष्ये । प्रागागमनान्मे भाव्यं त्वया नीरुजया । दृष्ट्वा दर्शनीयं निवृत्तस्त्वहं न त्वां मोक्ष्यामि"।

बहिर्गते मुरारौ चिन्ताव्यग्रमानसा सैकाकिन्येव वेश्मन्युपविष्टाऽऽसीत् । पूर्वस्मिन्नेव हि दिने तस्याः क्षतक्षारक्षेपायमाणोऽसौ व्यतिकरोऽवर्तत । भूतिचर्चिताङ्गो रुद्राक्षमालालंकृतकण्ठनालो जटाधरः शाक्तपथानुयायी कोऽपि तापसो भिक्षार्थमुपागत इत्यालोक्य भिक्षादानाय सा स्वयमेवाग्रतोऽयासीत् । तां च समुपस्थितां वीक्ष्य स तन्मुखदत्तदृष्टिस्तस्या ललाटलेखाक्षराणि वाचयन्निवाभिनयंस्तस्थौ । "गृह्यतां भिक्षा" इति तया भाषिते द्राग्दूरीकृतकन्थो बभाषे–"मातः, कथं त्वया समर्पितां स्वीकरोमि भिक्षां परित्यजामि वा । यथा सा पुण्या तथाऽपुण्यापि" इति ।

"भगवन्, किमेवमुच्यते ?" इति पृष्टे तया सोऽब्रवीत्–"भूयोऽयमर्थो मया चिन्तनीयः । निशायां विलोकितधर्मपुस्तको विचार्यास्मिन्नेवावसरे श्वोऽत्रागमिष्यामि भवतीं च कथयिष्यामि किं मयैवमुच्यत इति । अद्य पुनरगृहीतभिक्षेणैव मया निवर्तितव्यमिति मां भवती क्षन्तुमर्हति"। इति भाषमाण एव स झटिति निर्जगाम ।

" आगमिष्यामि श्वः " इत्याभाष गतः स तापसोऽद्यागमिष्यतीति साऽद्य तमेव ध्यायन्ती प्रतिपालनपराऽवर्तत ।

अत्रान्तरे मनागिव समुत्पन्नभीर्मुरारिर्निवृत्य प्रेम्णा करगृहीतभवानीकण्ठो मन्दस्वरं बभाषे—" मातः, पश्य दर्शनीयं किमपि प्राप्तं बहिः " ।

" किमस्ति दर्शनीयम् । द्रुतनिवर्तनाय किमपि मनसि कृत्वा भाषसे । किमन्यत् । वेद्म्यहं ते शाठ्यम् । गच्छ भूयो रमस्व बहिरेव । गम्यताम् " ।

" मैवं मातः । सत्यमेव प्राप्तं बहिर्द्रष्टव्यम् । अस्त्येको मुनिर्द्वारदेशे लम्बकूर्चः । अनेका धारयति स रुद्राक्षमाला वक्षसि । मालाविक्रयिणमेव तं मत्वाऽहमप्राक्षम्—" अपि दास्यसि ने मालामेकां विक्रयेण ? । तदा स प्रत्यभणत्—"आः सुखं याच्यते माला बालेन । प्राणेभ्योऽपि प्रियतरा मे माला एताः । प्राणा मूल्यमेतासाम् । अपि वितरिष्यसि मयि प्राणान् यदि मालामेकां दास्यामि ?" इति । अहमवदम्—तिष्ठ क्षणं, मातरं पृष्ट्वाऽऽगमिष्यामि । परमतिष्ठन्नेव स मामनुसरन् गृहं प्रविष्टः । अतस्तन्निवेदयितुमेव ते द्रुतमागतोऽहम् । पश्य पश्य प्राप्त एव स तापसः ।

अनवसितवचन एव मुरारौ दीर्घकूर्चः कोऽपि तापसः प्रविश्य परिचितभवनमार्ग इव निःसंदेहो भवान्युपवेशनस्थलं प्रति चलितः । तमेव प्रतिपालयन्ती भवान्यपि तमुपागतमालोक्य प्रकटितनम्रभावा सादरं प्रणम्य बद्धाञ्जलिरवादीत्—" एहि भगवन् । त्वन्मार्गदत्तदृष्टिरेवासमुपविष्टाऽहम् " ।

तापसोऽवदत्—अपि सत्यमेतत् ? । विश्वसिति तर्हि मे वचसि भवती ? ।

**भवानी**—किमिति न विश्वसिमि । कथमलीकैर्वचोभिराश्वासयिष्यति मां भगवान् । अपि च भिक्षामगृहीत्वा गतेनागन्तव्यं पुनर्मुनिवरेणेत्येवासीन्मनसि मे । न स्थास्यत्यपूरितमन्मनोरथो भगवानित्येवाभवच्चिन्तितं चेतसा मे । परोपकारनिरता भवादृशाः साधवः कथमपूरितभक्तमनोरथा भवेयुः ? ।

"भवानि, स्वसुकृतेनैव सफलीभवन्ति मनोरथा जनानाम् । केवलमीश्वरोऽस्मादृशं कमपि निमित्तीकृत्य भाविनोऽर्थान् भाषयति" ।

"प्रभवन्ति भवादृशा महात्मानः कथयितुमर्थान् भाविन इत्येव तत्कृते पक्षपाति मनो मानवानाम्" ।

"सत्यमेतद्, भवानि, भाषितं ते । किन्तु विदितभाव्यर्थानामपि जनानां न सर्वदा भवति तत्करणे प्रवृत्तिः । ज्ञातमोक्षमार्गा अपि कियन्तः सन्ति समुत्सुका मोक्षाय । अपरस्मिन् नद्या रोधसि वसन्त्येव ते कर्मचण्डाला बौद्धा विहारे निर्विचाराः । तत्रैके सद्गुरूनन्ये च सच्छिष्यानात्मानं कथयन्ति । सर्वे चेतरान् कुपथे स्थापयन्ति । सुकृतात् स्वर्गो धर्म्याच्च कर्मणो जायते पूर्तिर्मनोरथानामिति ज्ञायत एव सर्वैः । तथा च सुकृतदुष्कृतपरिच्छेदेऽपि नाप्रगल्भा मतिस्तेषाम् । तथापि विना प्रसादादीश्वरस्य न सत्पथानुसरणसमुद्यता संपद्यते मतिर्जनानाम् । सर्वेषां ललाटे लिखिता वर्तन्त एवार्था भाविनः । तांश्च केचिद् मादृशाः प्रसादाद् भगवतो वाचयितुमपि जानन्ति । परं तस्य स्फुटीकरणं प्रायो विफलीभवति । अतो ज्ञातोऽपि न प्रकटयितव्यो भाव्यर्थोऽन्येषामित्येव संप्रति ध्यायति मनो मे । को नु ज्ञाता निवप्स्यति बीजमस्मचये । अतीन्द्रियज्ञानिनामस्मादृशानां ज्ञानं यत्र कुत्राप्युपयुज्य प्रमादात् श्रोतुः किमर्थं तद्धीनतां नेयम् ? ।"

"भवन्तु जनाः प्रमादिनोऽप्रमादिनो वा । मा मां तथाविधामाकलयतु भगवान् । कथनीयमेव भगवता स्वीयं हृद्गतं मे । मत्कथन-

समुद्यतेनाप्यत्रभवता जिह्वाग्रागता अपि बलान्निरुद्धा ह्यो विचाराः । नाद्य तथा कर्तुमर्हति भगवान् " ।

"भवानि, सत्यमन्यमनोज्ञानानिपुणा ते प्रज्ञा । परं किं ते मद्विचारज्ञानेन ?" ।

"परीक्षतां तत्रान्मां महाराजः । यद्यनर्हा स्यां भवतो विश्वासस्य तन्न भूयो भवन्तं प्रार्थयिष्ये । प्रसीदतु भगवान् वक्तुमेतत्—किमर्थं न स्वीकृता भगवता ह्यो मया प्रदत्ता भिक्षेति । तेन च मरणयातनाऽनुभूता मे मनसा । किमेतावन्ति मे पातकानि यत् पाणिस्पर्शनान्मम भिक्षावस्तुनाऽपि भाव्यं दूषितेन ? ।

"भवानि, त्वां पापां मन्यमानस्य जनस्य शतधा दीर्येत हृदयम् । परमनुल्लङ्घनीया आश्रमनियमा अस्मदीयाः । अपुत्रिणीप्रदत्ता न भिक्षा स्वीकरणीयाऽस्माभिः । सुतरां बाधन्तेऽस्मानरक्षिता आश्रमधर्माः । अरक्षिताश्रमनियमा हि मुनयो न भवन्ति शक्ता उपकर्तुमपकर्तुं वा भक्ताभक्तान् । यथाऽस्माभिर्नाङ्गीकरणीया भिक्षा पुत्रहीनायास्तथा तद्धेतुरपि तस्या न कथनीयः । अदया नियमा आश्रमिणामस्मादृशानामिति वयमगतिकास्त्वद्दुःखहरणे " ।

अपुत्रतादोषदूषितामात्मानं विज्ञायासह्यदुःखावेगा सा सहसा भूमौ निपत्योदगिरत्—"हा हा सत्यमहं पुत्रहीना । अवितथा वाग् भगवतः । परं काऽत्र मे प्रतिपत्तिः ? । पञ्च पुत्रान् प्रसूयापि भाव्यं मयाऽन्ततोऽपुत्रयैवेति मे नियतिरिति किं प्रतिविधानम् ?" ।

"भवानि, अलं दुःखेन । कोऽत्र स्वाधीनोपायो जन्तुर्नियतिविषये । धर्म एव केवलं कदाचित् प्रभवति नियतिमपि प्रतिकूलामन्यथाकर्तुम् । परमतीव निष्ठुरः स न सहतेऽल्पमप्याचारपरिस्खलितम् । असमर्थाश्च जन्तवः कार्त्स्न्येन विना दोषमाचरितुं धर्मविधिम् ।

तेनानुकूलनियतीनपि मानवान् नानुगृह्णाति धर्मः किं पुनः प्रतिकूलनियतीन् ? । ”

“ अशक्यक्रियाणि न कृतानि मानवैः कर्माणीति यदि कुप्येद्धर्मस्तन्न जाने को गुणस्तेन धर्मेण जनानामिति। तथैव यदि नियतिमात्रैकनियन्त्रितानि शुभाशुभानि फलानि न धर्माधर्मनिबन्धनानि तदफलमेव धर्मार्थमात्मनः पीडनं जन्तूनाम्। पूर्वकृतादसुकृतात् प्राप्तं यदि न परिहरति दुःखं धर्मस्तर्हि किं तेन धर्मेण ? । ”

“ मैवं वादीर्भवानि । नास्त्यन्यः समर्थतरो धर्मान्मनोरथपूर्तये जनानाम्। केवलं नासौ क्षमते वञ्चनं जनकृतम् । बहवो हि धर्माचारविडम्बनेनात्मानमेव वञ्चयन्ति । अन्यादृशं धर्मफलं त्वादृशीनाम् । अदत्तवञ्चनावकाशं लक्ष्यते ते हृदयम्। विरला एवं धर्मनिरता अचलनिश्चया योषितः । एतादृशीरेव वाञ्छति वनिता धर्मः । भवतु । ब्रूहि, सफलीकर्तुं ते जन्म किं भवत्यै निवेदनीयं धर्मेण ” इति ।

“ मां पुत्रवतीं कर्तुं मम च पुत्रं दीर्घायुषं विधातुमावश्यका ये सन्ति व्रतदानयज्ञनियमधर्मादय आचारास्ते मह्यमुपदेष्टव्याः ” ।

“ अस्ति साधनं धर्मे ते मनोरथपूर्तेः । परं विचार्य तत्काठिन्यं न त्वया तत् स्थापनीयं मनस्यात्मन इत्येव मन्यते मे मनः । न यस्य कस्यापि कृते यत् किमप्याचरणीयम् । किं हीयते ते यदि न स्वीकृता भिक्षा त्वद्धस्तात् भिक्षुणा मादृशेन ? । किमर्थं त्वयाऽऽत्मा तत्कृते खेदयितव्यः । न केवलं भिक्षादानमेवैकः पन्था धर्माचारस्य । अन्येऽप्यनेके सन्ति मार्गा धर्मकथिताः । यस्य कस्याप्यनुसरणं कल्पेत श्रेयसे ते । तत्तथैव क्रियताम् । साधयाम्यहम् ” ।

इत्युक्त्वा द्वाराभिमुखं प्रातिष्ठत स जटाधरः । तदालोक्य च भवान्यपि समुत्थाय दृढगृहीततच्चरणयुगला साश्रुगद्गदं जगाद—“ मैवं,

महाराज। नाहं मोक्ष्यामि चरणावेतौ। पुत्रलाभसौख्यद्वारं यद् भगवता मे दूराद् दर्शितं तत्र प्रवेशयितुमपि मां भगवानेव प्रभवति। तन्महाराज, प्रसीदतु भगवान् मे निवेदयितुं तद् धर्मसाधनं यन्मां पुत्रवतीं विदध्यात्। अघटनीयमप्यहं तद् घटयिष्यामि"।

"अपि घटयिष्यसि त्वम्। कथमस्य याथार्थ्यं मया विश्वसनीयम्?"।

"सशपथमहं प्रतिजानामि समक्षं भगवतः"।

तापसो विहस्यावादीत्—"अलमत्र विषये संभ्रमेण। अनुतापफलो भवेदिह संभ्रमः। एतदहं त्वां पृच्छामि ब्रूहि—अपि स्निह्यति ते हृदयं रूपवति तस्मिन् बाले यस्ते पुरोऽभूदुपविष्टः?"।

"अथ किं, महाराज। यद्यपि स नोदरान्मे निर्गतस्तथाप्यौरस इवास्मिन् स्निह्यति मे मनः। सोऽपि च मातरीव मयि स्निह्यति। न स्मरति स जन्मदात्रीमात्मीयाम्। अतोऽहं तस्य माता स च मे सुत इति विचारो द्वैतहीनः"।

"त्वदुदरादनिर्गतोऽयं बालः कथं ते हस्तमुपगतः?"।

"आसीदेकदा महापूरप्लावितं भैरवपुरम्। प्रवाहे पतिता अनेके तदा बालवृद्धाः पञ्चतां याताः। अयमपि च सह स्रोतसा वहन् केनचिद् धीवरेणासाद्य स्वगृहं नीतः। प्रोत्कटबाललोभया मया धनं वितीर्य सखीहस्तेन क्रीतः। न क्वाप्यद्य यावत् स्फुटीकृतोऽयं व्यतिकरः"।

"अपि नाद्य यावत् केनाप्येनं याचिता भवती?"।

"न केनापि। आत्मन एवायं बाल इति यदि केनचित् ज्ञातं स्यात् ततो याचितः स्यात्"।

"भवतु। अयमिदानीं सर्वथा त्वदीय एव। केवलमयं न निर्गत उदराद् भवत्या एतावदेवात्र परिहीनम्"।

" परमेतावतैव, महाराज, व्यर्थीकृतं जीवितं मे। अक्षमाऽहं यथाविधि धर्माचारानप्याचरितुम्। पुत्रहीनां मां विज्ञाय भवादृशः साधुरपि न स्वीकरोति भिक्षां मदर्पिताम्। यदि भवादृशा ज्ञानिनोऽप्यपुत्रतामेवं विद्विषन्ति तत् किमिव मादृशी मोहान्धाऽज्ञदृष्टिर्मन्येत ?। यथार्थपुत्रतां नेतुं मुरारिं पाटितोदरापि भवेयं यदि तथा स मे भूय उदरान्निर्गच्छेत्। परं कथं तद् घटेत ?। औरसादपि सुतात् प्रेयान् मे मुरारिः। तथापि न तदौरससुतस्पृहां मे शमयति। जातमृतान्यपत्यान्यजातान्येव जानन्त्यङ्गनाः। भवन्तु नार्यो मुग्धा मूढा वा। नेश्वरोऽपिपुत्रस्पृहां तासामन्यथाकर्तुं प्रभवेत्। पुरः स्थित्वेश्वरो यदि मोक्षदानोद्यतः स्यात् तर्हि वयं वदेम—भगवन्, पुत्रो जायतां नः। पूर्वं पुत्राननं वीक्षेमहि पश्चान्मोक्षं विन्देमहि। पुत्रसुखमेव मोक्षः स्त्रीणां, महाराज "।

" साधु, भवानि, साधु। पुत्रप्रेमदीपिकेवासि त्वं मूर्ता, दीपिता। न वयं नरा अक्षमा धारयितुं प्रेमाणम्। परं मह्याकाशवदतिमहदन्तरं नरनार्योः पुत्रप्रेम्णोः। एवं स्थितेऽपि चतुरा भवतीति कथयामि संहरतु पुत्रसंवर्धनस्पृहामात्मीयामिति "।

" किमिति ? "।

" यतस्तत्कृते न तत्साधनं त्वमुपयोक्ष्यसि यदहमुपदेक्ष्यामि "।

" कथयतु महाराजः। न भगवदुपदेशमहं विफलयिष्यामि "।

" भवानि, न मे मदुपदेशवैफल्यदुःखं पीडयति। परमनुपयुक्तसाधना भवती निरवसाने नैराश्यदुःखे पतिष्यतीति मे चेतो बिभेति कथनात् "।

" मैवं महाराज। कथयितव्यमेव तत्साधनं मे। एषाऽहं चरणयोर्भवतो मूर्धानं स्थापयामि "।

"भवतु । यदि कृतनिश्चया भवती तत् श्रूयतां कथयामि । ज्ञायत एवं त्वया यद् विश्वस्मिन् दानमूलं ग्रहणं सर्वत्र । सर्वेषां जननीपदे वर्तमानैषा भूतधात्री भूमिरपि विना विकिरणाद् बीजानां न वितरति धान्यं जनेभ्यः । विना बीजबलिदानं तृणाङ्कुरा अपि न प्ररोहन्ति । न तुष्यन्ति देवता विना यज्ञादिति तु त्वया स्यादेव श्रुतपूर्वम् "।

"एवं महाराज, । श्रुतपूर्वमेतन्मया । कथयतु भगवान् को यज्ञो मयाऽनुष्ठीयतां प्रीणनाय देवतानामिति "।

एवं भाषमाणयोरेतयोर्वाक्यार्थमजानन्नपि श्रवणपरो मुरारिर्दीर्घकूर्चस्य मुनेः समक्षं सहसैव मातरं विहाय गन्तुमधृष्णुवंस्तूर्ष्णीं स्थितोऽभूत् । बालभावाच्चिरं विना वाचं स्थातुमशक्नुवन्नेतावता च कालेनोत्पन्नवाक्यधृतिरभाणीत्—'मुने, अतीव बाधते शिरोवेदनाऽद्य मातरं मे । तदुपदिशतु भगवानौषधं किंचित्' इति ।

मुरारेरेतद् भाषणं निमित्तीकृत्येव स भूयस्तामवादीत्—"हन्त भवानि, अलमेष बालस्ते परिहाराय दुःखानाम् । तदर्थमेवैष ते सन्निधिमुपानीतः परमेश्वरेण । तव पुत्रैर्मर्तव्यमनेन च पितृभ्यां वियुज्य तव हस्ते पतितव्यमिति किमपि सहेतुकमेव लीलायितमीश्वरस्येति मन्ये "।

"कथमिव ? । विस्पष्टं ब्रवीतु भगवान् । " अथ समासादितदिव्यस्फूर्तिमिवात्मानं दर्शयन् स तापस ऊर्ध्वदृष्टिर्निमीलितनयनो हस्तं हस्तेन घट्टयन् मनागिव तारस्वरेण शनैरवादीत्—"किं मया कथनीयमेव ? । भवानि, श्रूयतां सावधानम् । दीर्घायुषः पुत्रञ्जनयितुं नरयज्ञेन संतर्पणमावश्यकं ते । शाक्तस्ते पिता शाक्तस्ते पतिरपि । अतः शाक्तधर्मानुसरणमेव ते यथार्थं धर्माचरणम् । अतो विना प्रदानान्नरबलेर्नान्यद्दानं त्वत्कृतं स्वीकरिष्यति भगवती कालिका । न नाना नरयज्ञं भगवती तोषमेष्यति नापि भवती दीर्घायुषं पुत्रं जनयिष्यति " इति ।

विरतवचस्येव तापसे भीतेव भवान्युदगिरत्—“ अहो भीषणता वचसः । कथं शक्यो मे नरयज्ञः ? ” ।

श्रुत्वैवैतत् मन्युवेगापूरितमिवात्मानं दर्शयन् सहसा समुत्थाय चरणाघातैर्भूमिं ताडयञ्जगर्ज— “ एवमेतद् । अहह, वृथैवायासितो मयाऽऽत्मा त्वत्कृते । यदि सत्यसाधनं पुत्रप्राप्तेश्चरितुमशक्ता भवती तत् किमर्थं त्वयाऽऽत्मा तत्कृते प्रश्नकर्मणि योजितः किमर्थं च कथनप्रतिकूलोऽप्यहं बलात् त्वया ख्यापितः ? । भगवति चामुंडे, किमित्यस्थिरमतेरस्याः क्षुद्राङ्गनायाः कृते कृतमुपकारोद्यतं मे मनो भगवत्या ? । अस्तु । भवानि, एषोऽहं प्रस्थितः ” ।

मुनेस्तं भीषणाकारमालोक्य भियमुपगता भवानी भूयश्चरणयोर्निपत्य तमवादीत् “ भगवन्, मैवं मयि कोपः क्रियताम् । अपराद्धं मया । नरयज्ञसंकल्पात् सत्यमहं क्षणं भीता । परं योषिदहम् । दुर्बलं मनो नारीणाम् । तेनैतज्जातम् । तत् क्षमतां महाराजः ” इति ।

एतदाकर्ण्य क्रुद्धतरमिवात्मानं दर्शयन् सतिरस्कारं विहस्याभाषत— “मृदुहृदया त्वं स्त्रीति यज्ञं भीषणं मन्यसे, कठिनमना अहं च निर्विचारश्चण्डालवृत्तिः क्रूरो नर इति तं शोभनं मन्ये इत्येव तेऽभिप्रायः ? । त्वं स्नेहपूर्णा देवताऽहं च रक्तमांससमुत्सुको वेतालो राक्षसो वा ! अहह न जाने किमित्यहमुद्यतोऽद्योपकर्तुमेतस्यामङ्गनायाम् ।अहो गर्हणा विमानना च । अहह दूषितं हृदयमद्य मे स्पर्शात् क्रोधस्य । पावयितुमेतद् भूयः सप्ताहमावश्यकं निर्जने स्वीकरणं धारणायाः ” ।

भवानी भूयोऽवदत्—“ पुनः कथामि महाराज, अपराद्धाऽहं सर्वथा । न भगवन्तं निष्करुणं निगदितुमुद्यताऽहम् । भवादृशं तपस्विनं बुद्धया गर्हयन्त्या मे न किं जिह्व्या सहस्रधा दीर्येत ? । सज्जाऽस्मि नरयज्ञेन तर्पयितुं देवताम् । परं केन नरेण तर्पयामि ? । मया हुतः कीदृशो नरो देव्यै रोचेत ? ” ।

"एवं मुहुः पृष्ट्वा मामनर्थे पातयन्त्या न तुष्टमद्यापि चेतसा ते ?। पुनर्मया कथितमनिष्टं विज्ञाय मां क्रूरहृदयं नराधमं प्रतिपादयिष्यसि ?"।

भवानी भूयः कम्पितस्वरमवादीत्—"नैवं, महाराज, । न तथा पुनः प्रमादिनी स्याम् । स्फुटमुपादिशतु भगवान् निःशङ्कं मनोगतम्" ।

अनुशयान्विता भवानी कात्स्न्येन स्वादेशानुपालनतत्परेत्यालोक्य स वीतरागो मुनिरब्रवीत्—"भवानि, भूयस्त्वं सकृत् तथा प्रमादिनी न स्याः, शतशो वा प्रमादिनी स्याः । नाहमंशतोऽप्यधुना ते प्रमादं गणयामि । नरयज्ञकल्पनैव भीतिदा ते । परमेतस्मादपि भीषणतरमग्रत एव । सज्जा भव तच्छ्रोतुम् । यदि पुत्रिणीमात्मानं चिकीर्षसि तत् प्राणेभ्योऽपि प्रेयसो नरस्य बलिरावश्यकः" ।

"किं प्राणेभ्योऽपि प्रेयसः पुरुषस्य बलिः ?"

"आम् । यन्मयोक्तं तदेवोपपन्नम् । मन्मुखनिर्गतो वाग्बाणो न भूयो निवर्तेत । शृणु भवानि, अनाच्छादितकर्णविवरा शृणु वचो मे । यदि पुत्रमेवाभिलषसि तर्हि पुत्रवत् प्रियस्यास्य मुरारेरेव बलिदानमावश्यकं ते" ।

समुद्भूतमन्युवेगा भवानी प्रोवाच—"किं मम मुरारेर्बलिः ?। किमेतदुच्यते, महाराज, । वरमभावः पुत्रस्य न पुनरेतादृशः क्रूराचारः । भवादृशैरस्वीकृता मदर्पिता भिक्षापि न मामतःपरमतितरां पीडयेत्"।

"पश्य पश्य पुनरनुसृत एव भवत्या स्त्रीस्वभावसुलभः पन्था योषिताम् । किं नामैष क्रूराचारः । न केवलमेतद् परमेतादृशानामन्येषां क्रूरकर्मणां दशकं त्वं स्वयमाचरिष्यसि । संमता पुत्रहीनेतेति मुखेन भाषमाणाऽपि न वेत्सि कियदुत्कण्ठितं हृदयमात्मीयं पुत्रसुखसेवनायेति ।

कामं वदतु भवती मृदुहृदया योषित इति । परं तथात्वे न ताः साहसिन्य इति जनैर्भाषिताः स्युः । पुत्रहीनतां धारयितुमिच्छन्त्या अपि भवत्या नाधुना तच्छक्यम् । अङ्कुरितस्पृहां भवतीं वीक्ष्य देवताभिरेव तत् कार्यमनुष्ठातुमारब्धम् । अनिच्छन्त्यपि त्वमधुना नरयज्ञं करिष्यासि मुरारिं च होष्यसि । एतदेव मे भविष्यज्ञानमेष एव च ते देव्या आदेशः" ।

एवं विद्युदाघातवत् परुषमभिधाय स तापसः सहसैव भवनान्निरगमत् । भवानी मुरारिमङ्के निधाय मुहुश्चुम्बन्ती बाष्पबिन्दुभिरात्मनस्तस्य च कपोलौ क्षालयन्ती जगाद—"किं पुत्रहेतोर्नरयज्ञो मुरारेश्च हवनम् ? । किमपर्याप्तो मे ग्रन्थिरानन्दस्य ? । वत्स मुरारे, कुतोऽद्य तेन मुनिना सह भाषितुमुद्यताऽहम् ? " ।

भवान्याननसंसक्तमुखो मुरारिरवादीत्—"किमेतत् क्रियते मातः । अहमत्रैव तवाङ्के वर्ते त्वं च कमाह्वयसि ? " ।

" वत्से, कमहमधुना समाह्वयेयं कश्च मां प्रतिभाषेत । कोऽत्र भुवि जीवति तथाविधो यो मे दुःखवारणाय सत्वरमायास्यति । भग्नं मे शिरो मुरारे " ।

" किं नाद्यपि नष्टा ते शिरोवेदना ? । तिष्ठ, अहमेव मम पाणिना मर्दयामि ते शीर्षं येन वेदना नश्येत " ।

" मा मा मर्दय मे मूर्धानं मुरारे । हस्तौ ते स्यातां सवेदनौ । नातःपरं कदाचिदपि मे मूर्धा नष्टवेदनो भविष्यति । भग्नो मे मूर्धा मुरारे " । एवं ब्रुवाणा सा पाणिना मस्तकं ताडयन्ती प्रोच्चैरोदितुमारेभे । अथ तत्प्रतिकारमजानन् किंकर्तव्यमूढो मुरारिरुवाच—" रुद्राक्षमालाधारिणा तेन मुनिना संप्रत्येव दत्तं ते शीर्षवेदनापहमौषधम् । तत् किं तदेव न स्वीकरोषि ? " ।

एतदाकर्ण्य तु दुःखावेगमात्मनो धारयितुमक्षमा सा विलपन्त्येवावादीत्—"हा धिक्, कियन्माधुर्यं निवसत्यस्याज्ञाने भाषणे च । भगवन्, किमित्यहमप्येवमेवाज्ञानिनी न कृता । तापसभाषितेऽक्षरमात्रमप्यनेन नाज्ञायत । यथाऽनेन तथा यदि मयाऽप्यज्ञातं स्यात् ततः सुतरां शोभनं स्यात् । किमुक्तं गच्छता तेन ? 'एतदेव मे भविष्यज्ञानम्' इति । यातु कामं निष्फलतां भविष्यज्ञानमेतस्य । न मयि संप्रत्यंशतोऽपि जागर्ति स्पृहा पुत्रसुखस्य । कात्स्न्येंनाधुना सा तिरोभूता । मम मुरारेरेवामृत्युलाभस्तोषाय । यदि तत्कृते परमार्थत एव पर्याप्तं मातृप्रेम्णा मे हृदयं ततस्तेन सत्येन स्वीकरिष्यन्ति मदर्पितां भिक्षां साधवः । तद् भविष्यमुद्गिरतस्तस्य कुमतेः सहस्रधा दीर्यतां जिह्वया"।

एवं भाषमाणा सान्ततः किमपि चेतसि कुर्वाणा भियमिवोपगता जगाद—"परं देवताज्ञैषेति भाषितं तेन । उल्लङ्घितदेवताज्ञया कथं मया देवताक्षोभो जनयितव्यः? । देव्यैव भाषितं तत् तापसमुखेन । काऽत्र प्रतिपत्तिः ?"।

इत्युक्त्वा भवान्या भूयो मुरारिमश्लिष्याभाष्यत—"अपि त्वं मामकीन एव मुरारे"। अविदितवाक्यार्थः समुत्पन्नकोपो मुरारिः प्रेम्णा भवान्या मुखे चपेटां दत्वाऽवदत्—"किमेवं मामद्यैवं पृच्छसि त्वम्? । नेच्छाम्यहमेवंविधां मुग्धां मातरं रोक्षनपराम्?"।

"अवितथा ते वाक् मुरारे । सदा क्रीडापरस्य सानंदप्रकृतेः स्निग्धवृत्तेर्भवादृशस्य मातृपदे स्थातुमनुचितैव मादृशी मूढा रोदनपरा निर्घृणा योषित् । सत्यमेवाहं विलापिनी । परं नावसानमामृत्योरेष्यति मे विलापोऽयम् । न नाशो मे मौर्ख्यस्यायुषि । मुरारे, मामकीनस्त्वं सूनुः । तत् किं ममैवोदरान्न निर्गतोऽसि? । पापाऽधमैषा योषित् । किमर्थमस्या उदरं प्रविश्यात्मा दूषणीय इति विचार्य किमन्यस्मात् त्वमुदराभिर्गतः ?"।

'उदरान्निर्गमनं' इत्यस्यार्थं कथं जानीयाद् बालो मुरारिः? । उदरवेदना बाधते मातरमिति साद्योदरमुद्दिश्य भाषते किमपीत्येव मत्वा स उवाच—"किं शिरोवेदनास्थानेऽधुना जठरवेदना बाधते त्वाम्?"। इत्युक्त्वा भवान्या जठरमर्दनाय मुरारिरग्रतोऽभवत्।

परं तं किमपि प्रत्युत्तरं कर्तुमक्षमा भवान्यसत्यदुःखावेगविवशा। चेतनामत्याक्षीत्।

—इति नवमः परिच्छेदः।—

# — दशमः परिच्छेदः —

हत्वा दुष्टान् सुखयितुमिह प्राप्त आसीत् सतो यो
हन्तुं रात्रिंदिवमपि च यं येतिरेऽज्ञाश्चिराय ।
कैश्चिद्धस्तैः क्वचिदपि सुखं प्रापितः पोषितोऽन्यैः
सोऽयं सूनुर्वसति विधितः श्रेयसे क्वापि लीनः ॥१॥

आसीद् यामस्तृतीयो यामिन्याः । अग्निवर्णचन्द्रशालायां स्वापगृहे कोणैकभागे प्रोज्वलमज्वलद्दीपः । पिहिताखिलवातायनेऽपिहितप्रवेशद्वारेऽस्मिन् विभागे दूरतो दीपात् अश्लिष्य भित्तिं वर्तमाने महति पर्यङ्के सह मुरारिणा स्वालिप्सया भवानी निपतिताऽभूत् । कथमप्यप्राप्तनिद्रा साऽद्य मुरारिशरीराहितकरा कदाचित् किमप्युत्प्रेक्ष्य भीतेव, कदाचिद्वितानाहितविलोचना किमपि ध्यायन्तीव, कदाचिदन्यतो विहितवदना विमुच्य कतिचिद् बाष्पबिन्दून् कथंचिदात्मानं संस्थापयन्ती, भूयश्च मुरारिशरीरदत्तदृष्टिस्तं स्वोदरे प्रवेशयन्ती तस्थौ ।

भवानीचरणान्तिकमध्यासितासना नीला यथानित्यमात्माङ्काहिततच्चरणमर्दनपरा कथाः काश्चित् कथयन्त्यवर्तत । परमन्यमनस्का भवान्यद्य नीलाकथासु हुंकारमात्रेणाप्यादरवती न बभूव ।

नीलयाऽप्यद्य स्वस्थचित्तया नाभावि । उभे अपि ते स्वस्वविचारव्यापृतमानसे अवर्तेताम् । सखीसंलापसुलभमानंदमनुदिनमनुभूयमानं नाद्य ते लब्धुं प्राभवेताम् । विदितान्योन्यौदासीन्ययोरप्येतयोर्न कापि परां तत्कारणं प्रष्टुमुदसहत । उभेअप्यविदितान्यहृद्यतामभ्यनयताम् ।

अथ भवानी नीलामप्राक्षीत्–"नीले, कियदतिक्रान्तं रजन्याः ?"।

**नीला**–कियदवशिष्टं पृच्छ।

**भवानी**–अप्राप्तनिद्राऽहमद्य।

विदितभवान्यनिद्रानिदानयापि नीलयाऽवाचि–"कथमद्य सहसैव हृतनिद्रा भवती ?"।

**भवानी**–देवी विजानाति।

**नीला**–किं प्रागागमनान्मे रोदनपरोऽभून्मुरारिः ?।

**भ०**-नहि नहि। समाश्लिष्टमत्कण्ठोऽद्य स यथानित्यं सेवते स्वापं सघुर्घुरम्। परं—

**नीला**–परं किम् ?।

**भ०**–परमस्य घुर्घुरध्वनिरेवाद्य मामततिरां भेषयति।

**नीला**–यदि नित्यमेव स्वपन्नयं घर्घरायते तत् किमित्यद्यैव भवती प्राप्तभीः ?।

**भवानी**–देवी तद् विजानाति। किमहं कथयामि ?।

एवमाभाषमाणा भवानी रोदितुमारेभे। रोदनादेव समासादितप्रत्युत्तरा नीला तदाश्वासनचिकीर्षयाऽभाणीत्–"कदाचिज्जायत एव कोऽपि व्यतिकर एतादृशः। अहमेव मूढा या त्वामेवं प्रत्युत्तरकर्मणि योजयामि। किमिव त्वया मे कथनीयम् ?। अपसारय संप्रति हृदयाद् विचारानखिलान्। यतस्व निमीलितनयना स्वापलाभाय यावदहं ते चरणसंमर्दनपरा भवेयम्। न कोऽपि प्रतिबध्नीयात् ते स्वापं यावदिह मे वासः। न बाधते कर्हिचिन्मामस्वापः। तव मुरारेश्च मुखमवलोकयन्त्याश्च मे नान्यदावश्यकं साधनं क्षपणाय कालस्य। उज्ज्वलं ज्वलन्तमेनं दीपमंशतो लघुतां नयामि येन ते नयनयुगं तत्प्रभापीडितं न स्यात्। अपि स्पृहा ते जलार्द्र-

पट्टिकायां शिरोनिहितायाम् ? । यदि मुरारिघुर्घुरध्वनिपीडिता भवती तत् समर्पय तं हस्ते मदीये येन बहिरेव तं नयेयमयं स्वापात्य ”।

परं नांशतोऽप्यरोचतैतत्करणं भवान्यै । सोवाच—“नाहमंशतोऽप्येनं समीपतो मे चालयेयम् । पश्यैष मामधिकतरमाश्लिष्यति । कृतविवर्तनोऽयमधुना विरतो घुर्घुरीकरणात् । तन्मन्येऽहमधुना भवेयं प्राप्तनिद्रा लीलया । त्वमपि याहि स्वापाय यदि स्पृहयसि । ”

इति वदन्तीमेव भवानींनिद्रा निमीलितनयनामकार्षीत् । परं नात्याक्षीन्नीला स्थानमात्मीयम् । अन्यैरेव विचारैरासीत् समाक्रान्तं हृदयमेतस्याः ।

‘ कुक्षिस्थापितमुरारितया भवानी वर्तते स्तोकं लब्धनिद्रा । परमहं कथं स्यां लब्धनिद्रा । भवत्वसौ गाढनिद्रासुखनिमग्ना प्रसादादीश्वरस्य । अद्यतनोऽयं निशासमय एव समुचितः कालो मे कार्यस्य । आवश्यकमेतः परीक्षणं कंचित् कालमवसरस्य । अदत्तसमीहितावसरा यद्यद्यतनी निशा नाशमेष्यति तन्मुरारेरायुरपि श्वोऽन्त प्रयास्यति । नाहं क्षमा निरोद्धं नाशं निशायाः परं नाशक्यं मे प्रयतनं परिरक्षणाय जीवितस्य मुरारेर्यदि भगवतः प्रसादादेवमेव भवानी निद्रानिमीलितनयना वर्तेत । भवतु मे यत्नः सफलो निष्फलो वा । हन्त मुरारेराश्लेषसुखं सेवते संप्रति भाग्याद् भवानी । परमनंतदुःखनिमग्ना स्यादियमद्य । अस्याः हरितवसनावगुण्ठितोऽसौ बालो हरितपल्लवविकसितजपाकुसुममिव विभाति नयनहरः । परं को नु विकसितं कुसुमं लतायामेव चिरं स्थापयितुमीहते । मयेव त्वयाऽपि यदि मुनिवृत्तं निहुतमभविष्यत् ततो मुरारेरापत् कंचित् कालं दूरतोऽगमिष्यत् । परं मुग्धया त्वया तत्सर्वं निवेदितमग्निवर्णाय । तदानीमेव परिसमाप्तमायुष्पा मुरारेः । रक्ष्यते त्वयेदं कुसुममद्य नयनहरं परं न किमपि ते श्वो भविष्यति हस्तयोः । श्वः संध्यायां भीषणायां लवशः

खण्डितमेनं द्रक्ष्यसि मुरारिं ते । अथवा धर्ममूढा भवती कदाचित् स्वयमेवार्पयिष्यति बलिदानाय बालमेनम् । नाधुना मे विश्वसिति हृदयं भवत्याम् । तन्मया भाव्यमेव संप्रति मत्कर्तव्यपरया ' इति ।

अत्रान्तरे केनचिद् भाषमाणेव निद्रायामेव भवान्येवं जजल्प— 'मैवं भूरकरुणो महाराज । नाहं कदाचिदपि ते न्यासीकरिष्यामि हस्तयोर्वत्समेनम् । अहमेव निदानं दुःखस्याखिलस्य । तदहमेव नेया हव्यतां महाराजेन येन मे दुःखमन्तं यास्यति भवतां च धर्मकार्यं पूर्णतां गमिष्यति । मा तावत्, यदा प्राणा मे देहादपयास्यन्ति तदैव मुरारिर्मे भवतो हस्ते निपतिष्यति ' इति ।

नीला चिन्तयामास—'सत्यमियं स्वप्ने बलिदानाय मुरारिमपहरन्तं मुनिमीक्षते तेनैवेयमेवं साश्रुगद्गदमुद्गिरति ' ।

अत्रान्तरे पुनरुत्स्वप्नायमाना भवानी प्रोवाच—' संप्रति दयार्द्रं हृदयं मत्कृते महाराजस्य । मधुरमिमं बालमुद्दिश्य संजातकरुणो महाराजः ' । एवमाभाष्य दीर्घं निःश्वस्य सा भूयो निद्रयाऽपाह्रियत ।

**नीला**—अयि मुग्धे, नृशंसा एते स्वप्न एव वत्से ते तथा दर्शयन्ति । अन्यदेवाचरिष्यन्त्येते ते समक्षम् । परं त्वमपि कथं तत् प्रतिकर्तुं शक्नुयाः ? ।

इति भाषमाणायामेव नीलायां पुनरप्युत्स्वप्नायमानया भवान्याऽवाचि—" मैवं महाराज कोपं कार्षीः । अस्मद्धितायैव भगवतैवमुपदिष्टम् । अन्यथा किमन्यद् भवादृशस्तपस्वी काङ्क्षेत फलं व्यतिकरादेवंविधात् । परं प्रसीदतु भगवान् कथयितुं मे यदि बलिदानसमर्पितोऽयं बालः पुनर्मे पुत्रतां प्राप्य चिराय मामानंदयिष्यति । यदि भगवानेव मामाश्वासयिष्यति तत् किमर्थमहं भर्तुः शासनमवधीरयेय, किमर्थं च देवतेच्छामुल्लङ्घयेमम् ? " ।

श्रुतभवानीभाषणैव नीला झटिति समुत्थाय मनस्यकरोत्—“ मदुक्तिरेव सत्यतां संप्राप्ता । भगवन्, त्वदेकशरणमधुना जीवितमस्य कुमारस्य ” ।

अत्रान्तरे स्वप्नसंदृष्टतपोधनप्रणामायेव मुरारिशरीरं परित्यज्य प्राञ्जलिं भवानीमालोक्य नीलाऽञ्जसैावकृष्य तस्याः समीपतो मुरारिमकृतपदशब्दा द्वाराद् बहिर्निर्जगाम ।

न ज्ञायते किं मुरारिरपि स्वप्नासतपोधनदर्शनोऽभूत् तदानीम् । यतो भवानीसमीपतः समाकृष्य नीलया स्वस्कन्धे स्थाप्यमानः सोऽप्युत्स्वप्नायमान एवमुदगिरत्—“ रे वीतराग, प्रयच्छसि मे रुद्राक्षान् भवदीयान् ? । बहवो भूषयन्ति शरीरं ते । किं ब्रवीषि—“ किं दास्यसि तत्कृते प्राणानात्मनं इति ? ” निवेद्य मात्रे प्राणानपि ते प्रदास्यामि । परं देहि मे रुद्राक्षांस्त्वदीयान् ” इति ।

नीला जगाद—“ ज्ञातं मया कमधिकृत्य किं त्वयोच्यत इति । परमभिन्नं जीवितमावयोः । कथमहमनुमन्येयान्यमपहारमेतस्य ? ” ।

* * *

स्कन्धस्थापितमुरारिर्नीला नन्दाघोषगामिनं पन्थानमाश्रित्य सरभसं पदानि क्षिपन्ती संचचार । तरुणीभूतायां तस्यां निशायां न कोऽपि प्रायात् पथा मानवः । तथापि मुक्तनिद्रो मुरारिरेव कदाचिदाभाषणपरो जायेत कार्यं चात्मनो वैफल्यं यास्यतीति सा चेतसि चिन्तापराऽवर्तत । परं न किमपि तथाविधमजायत भाग्यतः । उपधानीकृतनीलास्कन्धो मुरारिर्गाढनिद्रासुखसंसेवनपर एवासीदानिशान्तम् ।

नन्दोटजमुपगता नीला शनैर्द्वारमाजघान । कोऽस्ति बहिरिति सपरुषाक्षरं नन्दयाऽनुयुक्तया नीलयाऽभाणि—“ अहं नीलाऽस्मि । समुद्घाटय द्राग् द्वारं प्रथमम् ” । एतदाकर्ण्यैव नन्दा समुत्थाय पृथूकृत-

दीपज्योतिर्नीलामन्तरादाय पुनरपि पिहितद्वारयुगला स्वशयनमुद्दिश्य चचाल ।

नीलास्कन्धावलम्बिनो भारस्य वास्तवं रूपमजानाना नन्दाऽप्राक्षीत्–" मुग्धे, किं चौर्यपक्षपातिनाऽद्य जातं ते हृदयेन ? । मन्ये स्तेयलब्धं किमप्येतद् वर्तते वस्तुजातम् " ।

**नीला**– आम् । चौर्यमेवैतत् । विनाऽनुमोदनादाहरणं वस्तुनोऽन्यस्य भवति मोषणमेव । परमद्य मुषितोऽयं विषयः पराधीनोऽपि न परकीयः साकल्येन । ममत्वादहमप्यंशतोऽस्य स्वाम्यं धारयाम्येव । पश्यैतद् वस्तु मया मुषितमद्य । " इत्युक्त्वा दीपाग्निकोपविष्टया तया स्वाङ्के स्थापितस्य बालस्य मुखादवगुण्ठनं दूरीकृत्य स नन्दायै दर्शितः ।

बालमुखदर्शनान्नन्दा सुतरामुत्पन्नविस्मयाऽजायत ।

**नीला**–स्थविरे, अलमधुना परिहासेन । अहं तावन्मूढैव । तदेकीकृत्य सकलमप्यात्मनः पाटवं प्रदर्शय मे पन्थानमनुरूपम् ।

अतर्कितोपनतशङ्केव नन्दा जगाद–" अदृष्टपूर्वोऽप्येष बालो ज्ञायते मया संबन्धेन । अस्यां निशायां यदयं त्वया समानीतस्तन्मन्येऽस्य माता केनचिद् घातिता गृहं वा वैश्वानरेण कवलितमिति । "

**नीला**–इह समानीते मुरारौ तस्य मातरं मृतां गृहं वा दग्धमहं न गणयेयम् । ज्ञायत एव त्वया यद् भवानी मे प्राणा बहिश्चरा इति । किन्त्वतः परमावाभ्यां भाव्यं सर्वदा परस्परवियुक्ताभ्यामितीष्यत ईश्वरेण । कथमहं स्यां स्पृहावती मरणे भवान्याः ? । परमागमिष्यता दुःखेन सत्यं सा भवेत् श्वो भ्रान्तचित्ता । वरं मरणं न पुनर्भ्रान्तचित्ततेति न किं भवती मन्यते ? " ।

' परं कथय मे पूर्वं किं तद्व्यसनमागामि यदपहरिष्यति धियं भवान्याः ' इति नन्दया पृष्टा नीला–" ऊरीकृततपोधनवेषेण रुद्रभटेन

पुत्रप्राप्तये शाक्तधर्मोज्जीवनाय च वत्सं मुरारिं बलीकर्तुं कथमुपदिष्टा भवानी, तपोधनमुखेन देव्यैवादिश्यते बलिदानमिति कथमुत्पन्नविश्वासं भवान्या मुग्धहृदयं, वाराणसीनिवृत्तो भवानीपतिः कथं पूरयिष्यति बलिदानं, मुरारिस्नेहसमुत्सारणं देव्याज्ञासमुल्लङ्घनं वा कर्तुमक्षमतया किंकर्तव्यमूढा भवानी कथमुद्भ्रान्तचित्ता जायेत, किंबहुना भवान्यन्तिकान्मुरारेरपसारणमेवैकः कथमवशिष्टो मार्गः परिरक्षणेऽस्य प्राणानामिति सर्वं नन्दयाऽऽचचक्षे ।

रुद्रभट एव निदानमखिलस्यैतस्य व्यसनस्येति विज्ञाय पाणिना भालदेशं स्पृशन्ती नन्दा सतिरस्कारमुदगिरत्—" क्वचिदासाद्यैनं रुद्रभटमुदरप्रवेशितखड्गतं पञ्चतां नेतुमिच्छन्ती भवती किमित्यद्याप्यपूरितमनोरथा तिष्ठति ? । प्रागेव चेत् पूरितमनोरथाऽभविष्यद् भवती तन्नैतद् व्यसनमापतिष्यद् मुरारेः प्राणपरिरक्षणाध्वनि भवान्या भवत्या वा " ।

**नीला**—न किं भवत्येव मां निवारितवती मारणाद् रुद्रभटस्य ? । न स्वापराधहेतोः कोऽपि हन्तव्यो मानव इति न किमासीदुपदिष्टं त्वया मे ? । त्वदुपदेशादेवाद्याप्यहमनिहतरुद्रभटा चरामि ।

**नन्दा**—सत्यमेवोपदिष्टं मया ते । विरता त्वं मारणात् तस्येति निर्व्यूढस्त्वया प्रथमो विभागः । परमधुना तस्य मारणेऽमारणे वा भवती प्रभवति । धर्मोद्धारमिषेण नगरेऽस्मिन् यथेच्छमन्यमनाचारमाचरन्तं रुद्रभटमहं नातितरामपराधिनं गणयेयम् । परं पूर्णीभूतान्यधुना पापानि रुद्रभटस्य । तथाप्यबला त्वं कथमेनं समुचितेन दण्डेन योजयितुं प्रभविष्यसीति भृशं शङ्काकुलं मे हृदयम् ।

नन्दाया आनने पाणिं समर्पयन्ती नीला प्रोवाच—" अलमेतेन भवत्यास्तत्त्ववादेन । रुद्रभटमारणान्मुरारेस्तारणमेवाधुना मे गुरुतरम् ।

# एकादशः परिच्छेदः ।

## ( मुरारेर्बौद्धविहारनयनम् )

अहं सखी वा मम रक्षितुं न
क्षमा कुमारं सुकुमारमेतम् ।
अतो विहारे परिरक्षणीयो
मातर्मया त्वच्चरणार्पितोऽयम्

ऊर्ध्वं निशीथाद् वेणुवनविहारविभागे न कोऽपि पर्यभ्रमन्मार्गेण । नासीदेवात्र संभवो मोषणस्येति न केवलं नाभवन्नत्र रक्षकाः परं दीपा अपि न प्राकाशन्त स्थलेषु प्रमुखेषु । तथापि क्वचिदुटजे कस्यचिद् भिक्षुकस्यानिर्वापितो बुद्ध्या स्थापितो वा मन्दमदीप्यत दीपः ।

एतादृश एवैकस्मिन्नुटजे पुरोनिहितपुस्तकौ जीर्णमन्युशमधनौ प्रपठनपरावास्ताम् । सकलभिक्षुहेतोर्भगवत्याऽवलोकितयाऽभूद् विलिखितं पुस्तकं तत् ।

प्राप्तजृम्भो जीर्णमन्युरवसाने द्वितीययामस्य यामिन्या निद्रोत्सुकः सालसमंगविक्षेपानभिनयन् शमधनमवादीत्—“ अलमधुनाऽनेन पुस्तकपाठेन । निद्रायां प्रसितोऽहमधुना न पारयामि प्रेक्षितुमिमान्यक्षराणि ।

“ किं भवानुत्सुको निद्रया ? ” । कस्मै निवेद्यत एतत् त्वया ? । कस्ते स्वापमधुनाऽनुमन्येत ? । निखिलां निशामननुभूतनिद्रोऽहं पठेयं पाठान् धार्मिकानिति किमर्थं स्वयमेवाङ्गीकृतं त्वया पुरो भगवत्या अवलोकितायाः ? ” ।

"तथाविधं तन्निर्बन्धं वीक्ष्य स्वीकृतं मया तत् । कथं तदाज्ञोल्लङ्घनीया ?" ।

"असत्यमेतत् । नैवैतादृशो निर्बन्धोऽस्ति कर्हिचिद् भगवत्याः । नापि च तथा समादिष्टं यथा त्वं कथयसि । स्वयमेव त्वयैतत् स्वीकृतम् । अवलोकिताया मृणालिन्या वा मुहुः पुरो नर्तितव्यं, अर्थवादैः प्रीणयितव्यमिति ते प्रकृतिजमेव संप्रति संजातम् । प्राक् प्रभातात् नूतनमेतत् पुस्तकं मुखोद्गतं करिष्यामीति भाषणेन भवता लब्धोऽवलोकितामुखनिर्गतः साधुवादः । तद् भाव्यमेव त्वया पठनपरेण । विना समाप्तेरध्यायानामखिलानां नैवाहं त्वां मोक्ष्यामि । त्वयैतत् कार्यं कारयितव्यमिति मातुरवलोकिताया आदेशो मे" ।

एवमुक्त्वा शमधनेन जीर्णमन्युकंधरां बलादाकृष्य स पुस्तकनिविष्टदृष्टिर्व्यधायि । सोऽपि सत्रासमगदत्—"उपवेशय मामत्र यदीच्छसि । परमक्षमा मे दृष्टिर्द्रष्टुमक्षराणि पुस्तकगतानि । कृपया पूर्वं दूरीकुरु करमिमं कंधरायां मे स्थापितम् । लीलया भवता धृताऽपि महतीं व्यथामनुभवन्तीयं मे ग्रीवा, तस्मिन् दिने तस्य शाक्तस्य हस्तौ बलात् धृत्वा स कामवस्थामासीत् प्रापितस्तन्मां प्रत्यापयति" ।

"त्वमपि तथाविधमेव दण्डमर्हसि । प्रियशिष्यतापदमवलोकिताया लब्धुमिच्छति भवान् । अनुभव तर्हि तत्फलमधुना । पुस्तकगतानामक्षराणामस्तु ते मस्तके प्रवेशो न वा । किं तेन मे ? । भगवत्यवलोकितैव तत् त्वां स्वयं प्रक्ष्यति श्वः । परमद्य यथा त्वं भूमिस्थापितशिरा न स्यास्तथा मया विधेयमित्येव मे कार्यमहं गणयामि । तच्चाहं करिष्याम्येव" ।

नासीच्छक्यं जीर्णमन्योः किमप्यनुष्ठातुमनिष्टं शमधनस्य। अतः स भूयः पुस्तकं पठितुं प्रायतत। परं जृम्भिकाततिव्याकुलात्तदाननात् न निरगमच्छब्दः। परिसमाप्तत्वात् करणीयकलापस्य विरचितपद्मासनः शमधनो ध्यानपरस्तस्थौ।

अत्रान्तरे केनचिच्छनैः संताडितस्य बहिर्द्वारस्योदभवच्छब्दः। तमाकर्ण्य संजातभीर्जीर्णमन्युरवादीत्—"शृणु शमधन सावधानं, ताड्यते केनापि बहिर्द्वारमिति तर्कयामि"।

परं तन्मनस्यकुर्वाणः शमधनः प्रोवाच—"केवलं पुस्तकपाठविडम्बिभिरेतादृशा एव श्रूयन्ते शब्दाः। कर्णभैरवमप्याकर्ण्य रवं दिवा निर्भयो वर्तमानो जनः क्षुद्रादपि शब्दाद् बिभेति रात्रौ। भत्र पुस्तकपाठतःपरो येन न ते श्रुतिपथमेष्यति शब्दो बहिर्गतः"।

अत्रान्तरे भूयः संताडितबहिर्द्वारेण केनचित् 'उद्घाटयत द्वारमुद्घाटयत' इति शनैरुच्चरिता अश्रूयन्त शब्दाः। तदानीं तु जीर्णमन्योः परां भुवमापत् साध्वसम्। स उवाच—"शमधन कोऽसावस्यां तरुणीभूतायां निशायां द्वारोद्घाटनं प्रार्थयते? अपि च नैषा पुरुषवाणी"।

अहो ते शौर्यम्। किमेषैव निर्भिकताऽऽसादिता त्वया मातुरवलोकितायाः?। अपि च नरवाचोऽपि नारीवाक् त्वयि सविशेषां भियं जनयति?"।

"मैवम्। परं संचरन्ति कदाचिच्छाकिनीडाकिन्यादयो निशायामिति किंचित् संजातभीकं मे मनः"।

"नास्ति बहिः शाकिनी डाकिनी वा। आश्रमवर्तिन्येव काचिद् बहिःस्थिता धर्मभगिनी स्यात्। तदुत्थाय दूरीकुर्वर्गलां द्वारस्य"।

" नाहं गमिष्यामि । मदीयं हृदयं तु समाक्रान्तं विस्मयसाध्वसाभ्याम् " ।

" एतावन्तं कालं बहिराश्रमात् स्थितं कयाचिद् योषितेति समुचितो विस्मयः, परं किंहेतुकं साध्वसं ते ? " ।

" अस्मान् पीडयितुकामेन भाव्यमुद्धतेन केनापि शाक्तेनागतेनेति शङ्कया ससाध्वसं मे हृदयम् । अस्मद्वञ्चनधियैवासावूरीकृतवनिताध्वनिर्भविष्यति । तस्मिन्नहनि चतुष्पथे शाक्तकृतः स कलहोऽद्यापि तिष्ठति पुरो मे चक्षुषोः । तेषामेकेन ताडितानामङ्गानां मे नाद्यापि व्यथा दूरीभूता । तदानीं त्वद्विघ्निततांडनोऽसौ कदाचित् पूरयितुमात्मनो मनोरथं केनचिन्मिषेणागतः स्यात् " ।

" यथा मत्सान्निध्यतस्तदा जातस्त्वं रक्षितस्तथाऽधुनापि भविष्यसि । अपि चास्मत्ताडनधिया न कोऽप्यत्र विहारमागन्तुमुत्सहेत शाक्तः । यदि कश्चिदेष्यति तन्नचिरात् स गलितपाणिर्भविष्यति " ।

" अत्रान्तरे पुनरश्रूयत वनिताह्वानध्वनिमिश्रितो द्वारताडनरवो यथापूर्वम् । तदा शमधनः पुनरवादीज्जीर्णमन्युम्—गच्छ दूरीकृत्यार्गलामानयात्र तं यो बहिस्तिष्ठति । भवतु सा नारी नारीस्वरो नरो वा । किं न गच्छसि ? । अहो भीरुता ते । भवादृशा भीरव एवास्मासु बौद्धजनेष्वखिलेषु भीरुतादोषं स्थापयिष्यन्ति " ।

" मैवम् । नाहं भीतः कलहात् । धर्मधियैव केवलं परिजिहीर्षामि कलहम् । अन्योन्यताडने हि परस्परदेहसंसक्ताः प्रयान्ति पञ्चतां प्राणिनः । एवं गते 'अहिंसा परमो धर्मः' इति कथं रक्षितं स्यात् तत्त्वमस्माभिः ? " ।

जीर्णमन्योरखिलमिमं तत्त्ववादं श्रोतुं न सुचिरमतिष्ठत् स्वासने शमधनः। स उवाच—" भवतु। ज्ञातं मया ते विज्ञानम्। अहमेव गत्वा द्वारार्गलामपनयामि "।

आसनस्थोऽपि द्वारोद्घाटनात् किमपि व्यसनमापतेदिति तर्कयन् ससाध्वसचेता जीर्णमन्युः केनचिदपदेशेन शमधनं निरोध्दुकामः प्रोवाच—" वयस्य, क्व गम्यते ?। न त्वयाऽपि पठितोऽन्त्योऽध्यायः ?। तत् तथैव तिष्ठतु समाह्वानपरः स बहिर्गतो जीवः। अपि चास्यां प्रौढीभूतायां निशीथिन्यां न किमावश्यकं द्वारोद्घाटनायानुमोदनं भगवत्या अवलोकितायाः ? " इति।

अत्रान्तरे पुनरश्रूयताह्वानशब्दः। तमाकर्ण्य जीर्णमन्युनाऽभाणि—" असंशयमयं स्त्रीशब्दः। किमपि छलयोजनमेवविपक्षाणाम्। अन्यथाऽस्यां निशायां किमर्थमेष्यत्यङ्गना विहारमिममस्मदीयम्? " इति।

परं प्रत्युत्तरीकर्तुमेनं न तस्थौ तत्र शमधनः। स गत्वाञ्जसा निरर्गलितकवाटो द्वाराद्बहिः स्थितामवगुण्ठितमुखीं स्कन्धार्पितभारां पुरः पृष्ठतश्च भिया प्रेक्षमाणां कामप्यङ्गनां ददर्श।

समुद्घाटितद्वारमालोक्याश्रममपृष्टप्रवेशसंमतिरेव सा द्राक् प्रविश्य सभयमवादीत्—" सार्गलीक्रियतामादौ द्वारम्। प्रसीद भगवन्। मैतद् द्वारं स्थापय समुद्घाटितम्।

शमधनः प्रोवाच—" इदं मया पिहितं द्वारम्। अलमत्र भयेन कथय काऽसि त्वम् "।

साऽवादीत्—" अर्गलीकृते कपाटयुगले सर्वं कथयिष्ये "।

तदाकर्ण्य भीतो जीर्णमन्युस्तारस्वरेणाब्रवीत्—" सखे, मा पिधेहि द्वारम्। इयन्तं कालमुद्घाटनं प्रार्थयमानैषा संप्रति पिधानं प्रार्थयते। किमपि कैतवमहमाशङ्के। माऽत्र करणीयो विश्वासः "।

शमधनो विहस्याभणत्—" त्वयाऽपि पूर्वमासीत् प्रार्थितमनुद्घाटनमधुना च प्रार्थ्यत उद्घाटनम् । उभयमपि भयमूलमेव " ।

दृढपिहितकपाटयुगुलं शमधनमनुसरन्ती नीला तदाश्रयविभागमुपेत्योचे—" नाहमत्रभवन्तं चिरं सशङ्कं कर्तुमभिलषामि । परं प्रसीदत्वार्यो मुक्तस्वापां विधातुमादौ भवदीयां मातरं भगवतीमवलोकिताम् " इति ।

भूयः संवर्धितसाध्वसो जीर्णमन्युरूचे—" पश्य पश्य कथमपि लब्धप्रवेशैषा संप्रति मातरमेव मुक्तस्वापां विधातुमनुनयति । तन्मन्ये कोऽपि गभीरः कपटप्रबन्धोऽसौ शाक्तनामिति । कथमेते शाक्ता वञ्चयिष्यन्तीति न वयमनुमातुं पारयामः " ।

इत्युक्त्वा सधीरमिवात्मानं दर्शयन् जीर्णमन्युरब्रवीत्—अलं तावन्मातरं व्यसने पातयित्वा । आवयोरेवात्र यद्भावि तद्भवतु " इति ।

परं तमवमत्य शमधनः प्रोवाच—" नावां न वा माता पीडयेत व्यसनेन । निद्रितं बालकमुद्वहन्ती काऽप्यशरणा शरणमन्विष्यन्त्यात्मरक्षणायास्त्यागतेति किमविषयं ते चक्षुषोः ?। कीदृक् ते भयमेतस्याः ?।

" शमधन, अलमेतेनाङ्गाराकर्षणेन । स्त्रीरूपी कदाचिदयं पुरुषोऽपि स्यात् । तत्स्कन्धवर्ती स कदाचित् बालोऽपि न स्यात् । दम्भनिपुणा एते शाक्ताः केनचिच्छद्मनाऽभ्येत्य कथमस्मान् घातयिष्यन्तीति न ज्ञायेत " ।

परं सतिरस्कारं तच्छद्मश्रृण्वन् स नीलामवादीत्—" वनिते, गच्छाम्यहमाह्वातुं मातरमवलोकिताम् । परं यदि तथाविधं गुरुतरं प्रयोजनं स्यात् तदहं तां मुक्तनिद्रां करिष्ये " ।

" नाहमवलोकितायाः साग्रहा मोचने निद्रायाः । भवद्भिरप्यङ्गीकृते मत्कार्ये पूरितमनोरथाऽहं निर्गमिष्यामि " ।

" किमस्ति ते कार्यम् ? "

प्राक् प्रतिवचनदानात् भूमावुपविश्य पाणिभ्यां वक्षोविभागे दृढं धारयन्ती मुरारिमवोचत्–" प्राणाः केवलमस्य बालस्य भवद्भी रक्षणीयाः, एषैव केवला प्रार्थना मे "।

" किमुच्यते "। रक्षणीया मया प्राणा अस्य बालस्येति ? । कोऽस्ति समुद्यतोऽपहर्तुमस्य प्राणान् ? " ।

" ते शाक्ताः । सोऽग्निवर्णः । स रुद्रभटः " ।

**जीर्णमन्युः**–वयस्य, अपि श्रुतान्यभिधानानि । त एवैते शाक्ता यैरहं तस्मिन् दिने ताडितः पथि । पश्य, न किमासीन्मया ते प्रथममेव कथितं यत् किमप्येतच्छाक्तानामेव कैतवमिति ? । ब्रूहि न किमहं भवतश्चतुरतरः ? ।

**शमधनः**–(सतिरस्कारम्) विदितं ते चातुर्यं मे । वनिते, किमर्थमेते शाक्ता उद्यता अपहर्तुं प्राणानस्य बालस्य ? ।

" देव्या बलिदानहेतोः । अलमलं कालक्षेपेण । निद्राभङ्गापराधार्थमहं दशकृत्वो मातरमवलोकितां क्षमां याचेय । परं प्रसीदत्वार्यो द्राग् जागरयितुं ताम् । कथं दुर्बला मादृश्यङ्गना प्रभवेत् परिरक्षितुं बालमेतम् ? । भगवत्यवलोकितैव शक्नोति तदनुष्ठातुम् । अतस्तदधीनतामेव नेतुमिमं बालमहमागताऽस्मि । तदर्हति तथा मया कारयितुमार्यः " । इत्युक्त्वा सा रोदितुमारेभे ।

अथ शमधनोऽब्रवीत्–" वनिते मैवं रोदीः । ज्ञातं मयाऽधुना सर्वम् । का मात्रा निद्राया अवलोकितायाः पुरतस्तेऽस्य व्यसनस्य ? । एषोऽहमानयामि क्षणेनैवात्र भगवतीं ताम् ।

जीर्णमन्युरवदत्–" तिष्ठ वयस्य । अहमप्यागच्छामि सह त्वया समीपं भगवत्याः " ।

**शमधनः**–किमर्थम्? । त्वमत्रैव स्थितस्तावत् समाश्वासयैनां योषितम् । किं न पश्यसि कथमियमभिभूताऽस्ति दुःखेन महतेति? " ।

**जीर्णमन्युः**–कथमस्याः शाक्ताङ्गनायाः पुरो मामेकाकिनं विहाय गच्छसि? । नाहं भीतः । परमुभाभ्यामाहूता भगवती द्राङ्मोक्ष्यति निद्रामिति ब्रवीम्येवम् ।

अनाकर्ण्य तद्वचनं शमधनः समुत्थायाभ्यन्तरमयात् । परं जीर्णमन्युस्तमन्वयात् ।

संप्रति समुत्पन्नाशाऽभवन्नीला । यतः 'कदाचिन्मुक्तनिद्रा भवानी मुरारिमसन्तं समीपे विज्ञाय मुक्तनादा मन्निर्गमनजातशङ्का ग्रहणाय मे प्रेषयिष्यति सेवकान् मदनुसारिणः' इति विचारैर्भीतहृदया पर्याकुलमानसा साऽवर्तत । परं संप्रति नष्टभीः सा मुरारिरक्षणलब्धाशाऽजायत ।

मुरारेर्मुखं पाणिना स्पृशन्ती सा जगाद–" वत्स, अपि स्थास्यस्यधुना जगतीह चिरं सजीवः? । भवानीभवनपरित्यागे भवत इव ममाप्यावश्यकतामुपगतेऽप्यहं स्वेच्छापरित्यक्ताग्निवर्णभवना भवेयम् । विना भवानीं नास्त्यस्मिन् भूतलेऽन्यत् स्थानं प्रेम्णो मे । परं स्वप्ने त्वां बलिदानवस्तुतां नीत्वा देवीं प्रीणयन्त्यामेतस्यां कथमहं यथापूर्वं सानुरागा वर्तेय? ।

अत्रान्तरे सह मृणालिन्या संप्राप्ता तत्र भगवत्यवलोकिता । जीर्णमन्युशमधनावप्यास्तां सह तया । नीलामविकृत्यावलोकितयाऽभाणि–" किमेषैव सा वनिता? किमेष एव च स्कन्धवर्ती स बालः? । जीर्णमन्यो, गच्छ पुरो बहिर्द्वाररक्षको भूत्वा तिष्ठ । अननुज्ञातो मया न कमपि मानवमन्तः प्रवेशय " ।

अनुपदं नीलाया भाव्यं कैश्चित् बौद्धाश्रममभिपतद्भिः शाक्तैरिति विचारेण समुत्पन्नसाध्वसो जीर्णमन्युर्मनागिव ध्यात्वा प्रोवाच—"नहि नहि। अरक्षितेऽपि द्वारे न काऽपि भवेत् क्षतिरस्माकम्" इति।

विदितजीर्णमन्युसाध्वसा साऽब्रवीत्—"अक्षमोऽयं कातरो बहिर्गन्तुम्। तच्छमधन, त्वमेव बहिर्गतो द्वारदेशे भव"। अथ सा नीलामप्राक्षीत्—"किं भणसि वनिते, समुद्यताः शाक्ता बलीकर्तुमेनं बालमिति?"।

'अथ किम्?'

मृणालिनी स्वावेशसंहरणाक्षमा मध्य एव सक्रोधमुदगिरत्—"अहो क्रौर्यं शाक्तानाम्"।

अ०—किं फलं पश्यन्ति शाक्ता बलीकरणेऽस्य?।

नी०—अस्त्यत्र नगरे भवानी नाम काचिदङ्गना मृतपुत्रा। प्राप्य पुत्रं भाव्यं तया चिरममृतपुत्रयेति।

मृ०—अहो, अनाचारः। अहो, अधर्मः। अहो, अधमतैतेषां शाक्तानाम्!।

अ०—मैवमन्येषां पुरो भाव्यं कदापि कोपपरया। किं ब्रवीषि वनिते समुद्यता भवानी तनयं स्वीयमाहुतीकर्तुमिति?।

नी०—नासौ तस्या औरसः पुत्रः। प्रेम्णा परिपालितोऽयं तया। सुतरां स्निह्यति सैतस्मिन्। परं मुग्धा सा केनचिद्दुष्टेनास्त्येवमुपदिष्टा। वशीकृतस्तेन भर्ता तस्याः। स चानिच्छन्त्यामपि तस्यां न कदाचिद्दत्तबलिर्भविष्यति।

अ०—तत् किं मया क्रियमाणमिच्छसि?।

नी०—एषोऽत्रभवत्या रक्षणीयः। न किमप्यन्यत्। भवत्यायेव समर्पयितुमेष समानीतोऽस्ति।

जी०—मातः, मैनं स्वीकुरु । मन्ये कथमप्याश्रमेऽस्माकं प्रवेशं लिप्सव एते शाक्ताः किमपि छलं योजयन्तीति तर्कयामि ।

मृ०—किमत्र भयेन । मातः स्वीक्रियतामेष बालः । वयमेनं रक्षेम ।

अ०—उभाभ्यामपि भवद्भ्यां तूष्णीमेव स्थातव्यमत्रविषये । ( नीलां प्रति ) कस्ते संबंधोऽनेन बालेन ।

नी०—अहमस्य धात्री, मातः ।

अ०—तत्किमुभे अपि युवामक्षमे परिरक्षणेऽस्य ? ।

नी०—अबला वयमक्षमा निषेद्धुं पुरुषान् । न वयं ज्ञास्यामः कदा कथं च त एनमपहृत्य देव्या अर्पयिष्यन्तीति । अपि च तैर्हठान्नीतेऽपि को निषेधयिष्यति तान् ? ।

अ०—न किमत्र सन्ति केऽपि ग्रामवासिनो जना ये करिष्यन्ति ते साहाय्यमेतमनर्थं परिहर्तुम् ? ।

नीला—नहि । निराशाऽहं कात्स्न्येन तद्विषये । शाक्ताध्युषित एवायं ग्रामः । अपि च मालिन्यमुपगतं शाक्तधर्मं बलिदानेन भूयः सतेजस्कतां निनीषवः संप्रति सर्वे शाक्ता मन्दमतयः ।

अ०—तत् कथं मामेतद्रक्षणक्षमामीक्षते भवती ? ।

नी०—एतद्रक्षणक्षमैवात्रभवतीति विज्ञायैवाहमत्रास्मि संप्राप्ता । तत् किमेवं पृच्छति मां भगवती ? । अदत्ताश्रयस्यास्य, भगवत्या, न शरीरे स्थास्यन्ति प्राणा निःशङ्कम् ' । इत्युक्त्वा प्रोच्चै रोदनमारभमाणया तया पुनरभाणि—" स्वीक्रियतामेवायं भगवत्या " इति ।

अथ प्राञ्जलिरवलोकिता, नभोदत्तदृष्टिः सविनयमवादीत्—" नमो बुद्धाय, नमो बुद्धाय । आनय तं बालं समीपे मे । अहमेनं रक्षिष्यामि " इति ।

एतदालोक्य तूष्णीं स्थातुमक्षमो जीर्णमन्युः स्वैरमगदत्–" न जाने किमर्थं स्वयं स्वीकरोति भगवती पापमेतत्। मातः प्राक् स्वीकरणात् पश्य निपुणं किमयं यथार्थो बाल एवेति।

अ०–अहो मौर्ख्यं ते। वनिते, एष मया स्थापितः स्वाङ्के तव बालः।किमभिधानं भवत्याः?।

नी०–नीला मेऽभिधानम्। कालभैरवचतुष्पथान्तिके वर्तमानेऽग्निवर्णवेश्मनि वसाम्यहं धात्रीभावेन कल्पितास्य बालस्य।

मृ०–वेद्म्यहमङ्गनामेनाम्। अचिरादेव नन्दानिलये संवृत्तोऽनया सह मे परिचयः।

अ०–नीले, कस्तावकीनो धर्मः?।

नीला–शाक्तधर्मैवाहं मातः।

अ०–तत्र किं मन्यते बलिदानं धर्म्यमिति?।

कर्णौ स्पृश्यन्त्या नीलयाऽवाचि–" नहि नहि। मातः, किं न सन्ति विना बलिदानादुपाया अन्ये परमेश्वरप्रीणनस्य?।

अ०–शृणु, मृणालिनि,। एतदर्थमेवाहं भवतीमधीरप्रकृतिं वदामि। शाक्ता अपि किं सर्वे नारीनरा निर्घृणा निर्विचारा एव?।

मृ०–अपवादभूतमेतादृशं क्वचिद् वर्तमानमुदाहरणं न शक्नोति परिमार्ष्टुं नियममखिलम्।

अ०-परं पक्षांधीभूतयोस्ते नेत्रयोः पन्थानं कुतो नासीदद्य यावदुपगत एकोऽपि मानवः? भवतु। नीले, नातःपरं वर्तितव्यं त्वया सचिन्तया रक्षणेऽस्य बालस्य।

परिपूरिताखिलमनोरथतया तिरोहितमधुना चिन्तया नीलायाः। परं दुर्लभमधुना दर्शनसुखं मुरारेरिति सा सुतरां दूयमानमानसाऽवर्तत। नाद्य यावत् कदापि तयाऽदृष्टमुरारिमुखयाऽस्थीयत।

परमावश्यकतयाऽद्य तस्य समर्पणस्य तद्दर्शनसुखेन स्फुटमेवावसितमिति परां मुदमुपागमदधुना दुःखं तदीयम् । आवश्यके समर्पणे न शक्यं दर्शनमिति न पारितं विचारयितुं प्रेममूढेन चेतसा तस्याः । अविवेकक्षमं हि प्रेम प्राणिनां सर्वेषाम् । अतः स्वयमेव सोत्साहमारब्धदारिका-परिणयौ पितरौ कन्यादानसमये रोदनपरौ जायेते । सैवाभवदवस्था नीलायाः । सा भीतेवावलोकितां पप्रच्छ " मातः, अपि मामनुज्ञास्यति भगवतीहागत्य बालमेनमवलोकयितुं भाषयितुं वा ? " ।

एवं वदन्त्या नीलयाऽवलोकिताङ्कगतः सुप्तोऽपि मुरारिरस-कृच्चुम्बितः । परित्यक्तसंसारभावा वीतरागाऽवलोकिताऽपि वीक्ष्य वात्सल्यमेतदुदश्रुविलोचना प्रोवाच—" हन्त पण्डितः संसारः । नीले, मन्येऽहं सत्यमसौ कोऽपि भाग्यवान् बाल इति । अन्यथा पूर्वं व्यसन-मुक्तस्यास्य, वत्सलहृदययोः भवानीभवत्योः कथं स्यात् पाणिपतनम् । बालदर्शनहेतोरागन्तुमिह नावश्यकमनुमोदनमस्मदीयम् । किं मन्यते भवती यदहमेनमर्गलितद्वारे पेटके स्थापयिष्यामीति ? । यदि सहानेना-भिलषति भवती निवासमाश्रमेऽस्मिंस्तदपि न स्यादत्र कस्यचिद् विरोधः । सुखं निवसत्वत्र भवती । सर्वेषामेव निलयोऽयमाश्रमः । भगवतो बुद्ध-स्यालयोऽयम् । आश्रयोऽयमनाश्रयाणाम् । अभयदोऽयं भीतानाम् " इति ।

नीला प्रोवाच—"भगवति धन्याऽसि त्वम् । परं नाहं क्षमेह स्थातुम् । भवानीभवनं प्रति संप्रत्येव निवर्तनमावश्यकं मे । श्वः प्रभाते मुरारे-रदर्शनसंभवः । सर्वतः प्रसरिष्यति संभ्रमो जनेषु । अतस्तदानीं मया तत्र वर्तितव्यमेव । भवान्यपि मया चिन्तनीयैव । तदहमधुना साध-यामि " । इति भाषमाणा नीला नमस्कृत्यावलोकितां निर्गता न चिरात् तमस्यदर्शनतामागता । बहिर्गतायां च तस्यां पिहिताश्रमद्वारः शमधनो भूयोऽवलोकितान्तिकमयासीत् ।

मुहुर्मुहुर्मुरोर्मुखे पृष्ठे च करेण स्पृशन्ती भगवत्यवलोकिताऽनवाप्तपरितोषाऽभाषत—“ बालो नाम निधानमानंदस्य जनानां सर्वेषाम् । कथं विहाय सर्वानयं हन्येत ? । भवतु । मृणालिनि, शयनासनसमीपे, मेऽस्य बालस्य कृते मृदुशय्यामेकां रचय ”।

गतायां मृणालिन्यामवलोकिता शमधनमवादीत्—“ धर्मबन्धो, उन्मनस्काया अपि मृणालिन्याः शाक्तजनदूषणं न निष्कारणम् । तथापि मिथ्याधर्मकल्पनाचिरपरिपूरितानां कथं शक्यं द्राक् सन्मार्गस्थापनं मानसानां शाक्तानाम् ? । सह त्वया जीर्णमन्युना च कलहायितं शाक्तैः कतिपयैरिति यदहं शृणोमि तत् किम् सत्यम् ? ” ।

श०—कीदृशं कुर्वन्ति ते कलहम् । का शक्तिस्तेषां कलहं कुर्तुं सहास्माभिः ? ” केवलं मया करयोर्गृहीतः शाक्तो नाभवत् समर्थो मोचयितुमात्मानं तस्मिन् दिने । परमेष जीर्णमन्युः सर्वत्रात्मनो दौर्बल्यं दर्शयतीति सत्यं जिन्हेति मे मनः । मातः, मैवैनं प्रेषय धर्मसाधनाय ग्रामे । तथैवेयं मृणालिनी स्वीयेनौत्सुक्याधिक्येन पातयिष्यति धर्मसंघमेनं व्यसन इति विचिन्त्य सत्यं ससाध्वसं मे हृदयम् । एष जीर्णमन्युर्भिया नगरभ्रमाद् बिभेत्येषा चौत्सुक्यातिशयेनानियतवेलं यत्र कुत्रापि गत्वा विवदते सह शाक्तैः ” ।

लब्धवचनावसरो जीर्णमन्युरवोचत्—“ कथितं मयास्यै बहुशो मा तं भैरवचतुःशालं याहीति । परं नैव मम वचनं मन्यते सा ” ।

अ०—सत्यमाह भवान् । कारणान्तरमधिकृत्योभावपि मयाऽवश्यमेवावेक्षणीयौ । उद्यानकर्मण्येव योजयेयमहं श्वःप्रभृति जीर्णमन्युम् । अलमस्य धर्मसाधनेन । त्वमेव च भव सहायो धर्मसाधने मृणालिन्याः ।

अत्रान्तरे सज्जीभूतं शयनं मुरारेरिति समाकर्ण्य वाचमाननात्संदेशहरस्य सह मुरारिणाऽवलोकिताऽन्तर्गृहं प्रविवेश । जीर्णमन्युशमधनौ च स्वं स्वं शयनालयं ययतुः ।

स्वीकृतमुरारिपरिरक्षणा जाता माताऽवलोकितेति दूरीभूतसकलचिन्ताभरमभूच्छिरो नीलायाः । स्त्रीभावे वर्तमानाऽपि नाबलाऽवलोकिता । सा च येन केनाप्युपायेन रक्षिष्यति शाक्तेभ्यो मुरारिमित्यत्र नासीत् संदेहलवोऽपि मनसि तस्याः । किमधुना विधेयं भवान्या इत्येवासीत्तस्यामवशेषश्चिन्तायाः । अभितो हि भवानीं सर्वमभाद् एतस्या दुःखरूपम् । मुरारेरदर्शनात् प्रथममेतस्या दुःखं स्यात् । क्वचिदयं सुरक्षितो जीवतीति ज्ञात्वा विस्मृतवियोगदुःखा भविष्यति सा । सुरक्षितो हि कदाचिदेष्यति स दृष्टिपथं तस्याः । परं स सुरक्षितः स्यादेवेति कथं ज्ञायेत । अन्योऽप्यासीदत्र विचारः प्रतिकूलः । बलीकृते मुरारौ भवानीपतिरग्निवर्णस्तोषमेष्यति । अतथाभूते तु भवेत् पतिद्रोहः । धर्ममूढतया सर्वदा दुःखभाजि भर्तरि कथं स्याद् गृहे सुखमेतस्याः । अन्यच्च मुरारिसंरूढस्नेहाया अप्येतस्या नासीद् अमहीयसी धर्मनिष्ठा । कोऽस्ति शक्तः शाक्तो लङ्घयितुमाज्ञां देव्याः । भवानी चैवं जानाति यद् बलिदानीकृतो मुरारिः पुत्रतामेष्यतीत्याश्वासनं देव्याः । अतो बलिदानेन मुरारेर्दम्पत्योः पुत्रलाभो धर्माचारसुखं च । कथमेवमुभयविधलाभपराङ्मुखी भवेद् वृत्तिर्भवान्या इति सुचिरं विचिन्त्यापि न नीला ज्ञातवती किमपि निश्चयेन । अथ सान्ततश्चिन्तितवती मुरारे रक्षणमाद्यं कार्यं मे । यथा तथा भवतु तत्कृते भवान्या भागधेयम् । तदन्तिके वसन्त्यहं तामाश्वासयितुं यतेय । परं मया प्रयतितेऽपि यदि साऽनासादितसान्त्वना स्यात् तत्तां दैवाधीनां विधास्यामि । किमसान्त्वनेन मे तस्याः ? ।

सह मुरारिणा विहारगमनसमयस्वीकृताया गतेर्मन्दतरामाश्रित्य गतिं वीतचिन्ता नीला नन्दालयं निववृते ।

इत्येकादशः परिच्छेदः ।

## द्वादशः परिच्छेदः ।

### ( मुरारिकण्ठाद् विगलितो रक्षाकरण्डकः । )

देवीप्रसादलब्ध-
श्चण्डमतेर्मन्त्रिणः सुतो गुणवान् ।
शतसंवत्सरजीवी
भवतु शुचिश्चण्डभानुनामाऽयम् ॥ १ ॥

अवसितं त्रियामया । प्राङ्गणविभागप्ररूढेषु पादपेषु प्रारभन्त प्राभातिकं कूजितं पक्षिणः । चटकाश्च काश्चिद् वातायनात् कदाचिदग्निवर्णभवनप्रविष्टा अप्यलक्ष्यन्त । पञ्जरगताः शुकाः “ उत्तिष्ठ वत्स, उत्तिष्ठ वत्स ” इति श्रुतिसुखमालपितुमारभन्त । तथापि न मुमोच भवान्यद्य मञ्चकं यथानित्यम् । प्राभातिकनिद्रानिमग्नया तयाऽभावि । अनतिदूरे च तस्या भूतलसंस्थापिते कर एकस्मिन् प्रक्षिप्याङ्गान्यासीन्निद्रिता नीला । प्रथममन्यया भाव्यं मुक्तशय्यया ततोऽहं भवेयं मुक्तशय्येति धियेवोभे अपि ते न मुमुचतुरद्य शय्यां स्वीयाम् । तयोरेका भवानी सत्यमेव संप्राप्तनिद्राऽभवदन्या च नीला बुद्ध्यैव निद्राविडंबनपराऽन्तरान्तरा भवानीचेष्टितदत्तदृष्टिरशेत ।

अथ मुक्तनिद्रा भवानी दूरीकृतमुखावरणवसना नीलां विलोक्याज्ञासीद् यदात्मनः सखी संप्राप्तगाढनिद्रा घर्घरायत इति । अतो मुक्त्वा मञ्चकमात्मीयं तदन्तिकमुपगता सा पाणिना परामृश्य तामवादीत्—‘ मुग्धे, न किमद्य मुमुक्षति शय्यां हृदयं ते ? ’ इति ।

ततो गतनिद्रयेव नीलया समुत्थायाभाषि—‘ सत्यमेवापहृताऽहमद्य निद्रया प्राभातिकया । मन्ये त्वमप्यहमिवाद्याहर्मुखसंप्राप्तया चिरम-

पद्दतासीर्निद्रया ' इत्यालपन्ती नीला सालसं कलेवरमात्मीयं तरलयन्ती समुत्थाय शयनीकृते कर उपाविशत्।

सजृम्भमाननं दधाना भवानी न्यगदत्—' न निशायामहमासं चिरं प्राप्तनिद्रा '।

" किं मां लब्धनिद्रां मन्यसे ?। उभे अप्यावामा निद्रागमात् संलापपरे अभूव । अन्ततश्चावामन्योन्यभाषणविज्ञानविहीने अजायावहि। मुरारिविषये पुनः पक्षपातिनो देवाः। स हि प्रागेव प्रथमयामाद् यामिन्या लब्धनिद्रोऽद्यापि गाढसुप्त एव "।

आकर्ण्य मुरारेरभिधानं झटिति पर्यङ्कवलितवदना भवानी तच्छयनस्थानं गता रिक्तगर्भं मुरारेः प्रावरणपटं तुन्दिलीभूतं प्रेक्षमाणा प्रोवाच 'मुञ्च शय्यां मुरारे। कियन्तं कालं स्वपिषि ?। किं नाद्यापि तुष्टं मनस्ते ?'। इति भाषमाणा सा शून्यगर्भं तत्रावरणवसनं वीक्ष्य प्रथममीषद्विषण्णाऽपि द्रागेव किमपि चिन्तयन्ती संजातमोदेवाबभाषे—'तथाविध एव वर्तते स मे वत्सः। उन्निद्रः स न कमप्याह्वयति न वा कदाचिदपि रोदिति। पश्य स्वयमेवावरुह्य मञ्चकात् पाणिनाऽऽत्मनः प्रक्षालितमुखकमलो गोष्ठे गोभिर्गोवत्सैश्च समं संप्रति क्रीडापरः स्यात्'।

**नीला**—तादृश एव सः। न स सहते केनापि विना हेतुं स्पृष्टं स्वशरीरम्। आत्मनैवात्मानं सेवते सः।

उभे अपि सोपानादवातरताम्। अल्पेनैव कालेन नीला मुरारिमाह्वयन्तीं भवानीमश्रौषीत्। तदा नीला बुद्ध्यैव पुष्पकरंडकहस्ता चन्द्रशालायां वातायनान्तिकमुपेत्य कुसुममालाग्रथनव्यग्राऽवर्तत।

अथाचिरादेव सोपानपथेन समीपीभूय भवानी नीलां प्रोवाच—"सखि, न क्वापि दृश्यते मुरारिः। बहुवारमाकारितोऽपि न स यच्छति प्रतिवाचम्। अपूपं सिद्धीकृत्य सह दुग्धेन तं भोजयितुमभिलषन्त्यहं

तं क्वचिदपि न प्रेक्षे । तत् त्वमेवेतस्ततो गत्वा गोष्ठे वाटिकायां वा तमन्विष्यानय । अहमत्र गृहमध्ये ते प्रतिपालनपरा तिष्ठामि "।

'तथा' इत्युक्त्वा भूमिस्थापितपुष्पभाजना नीला समुत्थायोद्यानं जगाम । अतीता पुनर्घटिकैका । परं नाज्ञायत वृत्तं मुरारेः । अतो नीला भवानी चोभे अपि तदन्वेषणपरे सर्वत्र परिभ्रम्य तं पुनः-पुनराह्वयताम् ।

"अपि दृष्टः क्वचिन्मुरारिः? आनय मुरारिं यदि क्वचिदीक्षसे। याहि द्रुतमेतस्यान्वेषणाय" इति ते पुरुषदर्शं प्रोचतुः । अन्ततो नैराश्यमुपगते उभे अपि ते मध्यगृहमाविश्य परस्परप्रलापपरे बभूवतुः ।

भ०—चिरेण जाताऽहं निशायां प्राप्तनिद्रा। अपि समीपेऽभवत् स मे तदानीम्? ।

नी०—किमेतत् पृच्छ्यते?। यथा स ते सर्वदा कुक्षिभागे वर्तते तथाऽऽसीन्निशायामपि ।

भ०—नैवम् । 'मदधीनं विधाय मुरारिं यतस्वाराधयितुं निद्राम्' इति भाषिते त्वया, मया स ते हस्ते समर्पित इति तर्क्यते चेतसा मे।

नी०—विपरीतमत्र किमपि तर्कयसि? । कथमस्मिन् कटे मे स लभेत स्वापम् । विना मृदुशय्यां च कथमहं तमस्यां भूमौ स्थापयेयम् । तथैव छिद्रशतभूषितमेतन्मे प्रावरणवसनम् । कथमहमेतादृशेन वसनेन तं वेष्टयेयम् । यत् त्वं कथयसि तत् त्वयैव निद्रायां श्रुतं जल्पितं वा स्यात् । मत्स्थानस्थिताऽहं त्वामप्राप्तगाढनिद्रामद्राक्षम् । परं मुरारिसमादानाय ते पर्यङ्कान्तिकमहं नैवागमम् ।

क्रमेण संप्राप्ता दासदासीजना जगदुः—सर्वत्रान्विष्यापि न लभ्यते क्वापि मुरारिरिति । कैश्चित् स उपवनेऽन्विष्टः । इतरैः स गोष्ठेषु प्रातिवेशिकानां भवनेषु च मार्गितः । अपरैरधस्ताद् गृहाणां

विवरेषु परैश्च शिरोगृहे मन्दिराणां वातायनादिषु विभागेषु विचितः। परं निष्फलीभूता यत्नाः सर्वेषाम्।

मार्गान्तरेण गत्वा दूरतो देशेष्वन्विष्यतां मुरारिरित्युपदिश्य प्रेषितोऽन्यो भृत्यगणोऽन्वेषणाय।

आसीदद्य वाराणसीनिवर्तनदिनमग्निवर्णस्य। पूर्वाह्ण एव स आगमिष्यतीति धिया भवानी तन्मार्गदत्तदृष्टिरतिष्ठद्। आगते भर्तरि सुकरं सफलं च भवेदन्वेषणं मुरारेरिति मन्यमाना भवानी विषण्णाऽपि तूष्णीमवर्तत। परं प्रागागमनादग्निवर्णस्य स्वीयं किमपि कार्यं चिकीर्षुर्नीला बलात् तामेवमालापे युयोज।

पूर्वमेव तया विमुक्तान्यश्रूणि भवान्यधिकानि। ततश्च यथा मुखदर्शनं न स्यात् तथा वसनान्तमानने समाकृष्य कुसुमावलीर्विरचयन्त्यवादीत्—सखि भवानि, किंकृतं तर्कयस्यदर्शनं मुरारेः?।

**भवानी॰**—अक्षमाऽहं तर्कयितुमत्र विषये। त्वमेव निवेदय मे यदि किंचिद्वेत्सि।

**नी॰**—मन्ये स मात्राऽपहृतः स्यात्।

**भ॰**—अहो ज्ञानं ते। सरित्पूरनिपतिता पंचतां प्रयाता सा कथमधुनाऽऽगमिष्यति नेतुं सुतमात्मीयम्?।

**नी॰**—पित्रा वा हृतः स्यात्।

**भ॰**—यदि स एनमत्रस्थमज्ञास्यत् तत् प्रागेव स तथा नो न्यवेदयिष्यत्। अस्माभिरपि स तस्मा अदास्यत। यथार्थो जनकः स्वसुतावाप्तये किमर्थमेवं निशायां चौर्यकर्मप्रवृत्तः स्यात्?।

**नी॰**—युज्यते। कुक्षिभाग आत्मनो निधाय मुरारिं सुप्तायां त्वयि मयापि सुप्तयाऽभावि। परं स्मरति भवती किं किं जल्पितं त्वया निद्रितयेति?।

भ०—न मया स्मर्यते तन्निश्चयेन ।

नी०—मा स्मरतु भवती जल्पनमात्मीयम् । परं स्वप्नस्मृतिर्न स्यात् परिमृष्टा ते ।

भ०—प्रसन्नो भवत्यास्तर्कः । सत्यमेव स्मराम्यहं तं स्वप्नमंशतः ।

नी०—कथय कोऽभवत् ते स्वप्नः ? ।

भ०—स्वप्नेऽहं जटाधरं तं मुनिमद्राक्षम् ।

नी०—किमब्रवीत् सः ?

भ०—सोऽवदत्—बलीकर्तुं मुरारिं मदधीनं विधेहीति ।

नी०—किं ततः कथितं त्वया ? ।

भ०—प्रथमं न मयाऽङ्गीकृतं वचस्तस्य । परं देव्याज्ञैवेवमिति सशपथं वदति तस्मिन् मयाऽङ्गीकृतं तद् अन्ततः ।

नी०—ज्ञातम् । तेनैवापहृतो मुरारिर्बलिदानाय ।

भ०—कुक्षेर्मदीयादाकृष्य नीयमानः स मया कथं न विज्ञातः ? ।

नी०—कथं त्वं ज्ञास्यसि ? देवीप्रसादपरिगृहीता एते मुनयो वर्तन्ते दृष्टिबन्धकलाकोविदा अखिलाः । कृतभवद्दृष्टिबन्धेनैवानेनापहृतो मुरारी रात्र्यामतीतायाम् । तेनैव न भवती ज्ञातवती तम् । न केवलं भवत्या अपि तु ममापि दृगनेनापहृता । अन्यथा कथमविदितं स्यादागमनं ममैतस्य ? । सावधाननिद्राऽहं प्रायेण ।

भ०—तदुत्तिष्ठ । आवामन्विष्य तं मुनिं प्रत्यानयेव मुरारिमधुनैव ।

नी०—देव्या दूत एषः । गृहस्थान्तराणामिव नैतादृशानां क्वचिदपि स्थिरो वासो भवनेषु । वियत्यपि संचरितुं क्षमा एते ।

भ०—किन्त्वालम्बितमत्कुक्षिं तमदत्तं मया कथं नेष्यति स मुनिवरः ? ।

**नी०**—न मयोच्यते स त्वया स्वयमेवार्पित इति। सर्वमप्येतत् स्वप्नसंवृत्तं स्यात्। परं स्वप्नेऽपि सह मनसा कदाचित् शरीरमपि कार्यं करोत्येव' इति वदन्ती नीला लब्धनिर्णयेवावादीत्—ज्ञातं मया सर्वम्। अवसितं आयुषा मुरारेः। समाप्तं संप्रति भवानीभवनप्रयोजनं मे। एवमाभाष्य बांधवमरणसमुत्पन्नशोकेव चिरमुच्चैरारटन्ती सा नातिस्फुटमुदगिरत्--"साधु जातम्। सफलीभूतं जन्म ते। अनुगृहीतासि देव्या। प्राप्ता भवत्या मुक्तिः। अहमेव मन्दभागिनी निरानन्दा। प्राप्स्यत्यधुना चिरजीवीन्यपत्यानि भवती। सर्वं संपत्स्यते संप्रति ते सुखाय। गतो मुरारिः। अहमपि गमिष्यामि। किं प्रयोजनमतःपरं मे त्वद्गृहनिवासेन?"।

श्रुत्वैतद् नीलाया अन्तिकमुपेत्य भवानी पाणिभ्यामात्मनस्तस्याः पाणी आदायावादीत्—"सखि, कथमेवं वक्तुं प्रभवति जिह्वा भवदीया?। कथमहं स्वयं यच्छेयं देव्यै दूताय वा तस्या मुरारिं बलीकर्तुम्?। परुषमेवमाभाष्य भवत्या न मे हृदयं दारणीयम्। मैवं क्षते क्षारं त्वया प्रक्षेपणीयम्। गतायां त्वयि कस्य पुरो मया दुःखं मे निवेदनीयम्?। परं यथा तथा भवतु। नांशतोऽपि स्फुटीभवति याथार्थ्यमस्य व्यतिकरस्य।

दुःखमूढामवेक्ष्य भवानीं नीला निजगाद—"यदि नैतत् स्फुटीभवति ते तदहं स्फुटीकरोमि श्रूयताम्।

**भ०**—कथय। अवहिताऽहम्।

**नी०**—शृणु हृद्गतमहं सुनिश्चितं ब्रवीमि। भर्त्रैव ते संमन्त्र्य सह रुद्रभटेन सुप्तयोरावयोः केनचिद् व्याजेनापहृतो मुरारिः। सुप्तेष्वेव जनेषु क्रियते चौर्यं तेषां भवनेषु मोषकैः। न च स्तेनाः स्तेयं कथयन्ति स्वकृतम्। आगतौ तौ कथं कपटनाटकं नाटयिष्यन्तीति भवती द्रक्ष्यत्येव। भवतीं देवीं च स्थापयिष्यतस्तौ दोषपक्षे। प्रकृत्यैव परुषहृदयाः पुरुषाः। न ते भर्ताऽतितरां परुषमनाः। परं

कलिरूपः स रुद्रभटस्तं यथा चोदयति तथाऽसौ नृत्यति। उद्धृत्य शाक्तधर्मं धर्मगुरुपदं बुभुक्षति स खलो रुद्रभटः। तत्कृते स यं कमपि बलीकर्तुं सर्वदा समुद्यत एव। द्रष्टव्यमेत्र त्वया कथमभिनेष्यतः कपटभूमिकां निजामूर्ध्वमागमनात् ताविति।

नीलानिगदनानुगुणं तदानीमेवाभवन्निवर्तनं भवनं प्रत्यग्नि-वर्णस्यात्मनः। सहैव तेनासीद् रुद्रभटः। पण्यवस्तुपरिपूर्णान् रथान् समानीतान् किङ्करैरेकदेशे स्थापयित्वा स भवनं निजं प्रविवेश। उपागमद् भवानी ससंभ्रममन्तिकमेतस्य। कथितं च तया 'गतायां रात्रौ क्वाप्यदर्शनतां गतो मुरारिः' इति। श्रुततदुभावपि व्यस्मयेताम्। अथ नीलामुखादाकर्ण्य वृत्तमखिलमग्निवर्णो रुद्रभटमवादीत्—'अलमत्र-विषये चिन्तया। देव्यैव चेदपहृत एतस्मिन्नक्षमोऽहं प्रत्यानयन एतस्य। अन्यथा तदन्वेषणाय सन्ति शतशो भृत्याः समीपे मे। एतावता कालेन न स्यात् स क्वापि गतो दूरम्। हस्तमुपगत एव तस्मिन्नद्यैव धर्म्यं बलिकर्मकार्यं समग्रयेव' इति।

देवीभक्तोऽपि रुद्रभटो देव्या नीतो मुरारिरिति नांशतोऽपि व्यश्वसद् धूर्तत्वात्। आसीत् तस्य सुविदितो मुरारिस्नेहो भवान्याः। वनिताजनव्याजस्यापि नासीत् सोऽनभिज्ञः। अतो विनाऽपह्नुति-माशयस्यात्मनः स जगाद—'अग्निवर्ण, यदि त्वं त्वद्भार्या वा नानुकूल बलिदानस्य तन्न तदनुष्ठेयम्। परं प्रथममामिषदर्शनेन भवताऽहमसंशयं वंचितः। मामपि न निरुणद्ध्येतद् बलिदानम्। भवतूद्धतोऽनुद्धृतो वा शाक्तधर्मः। शक्तिरेव शक्ता घटयितुं तत्। अनिच्छया देव्या अघटितेऽपि तस्मिन्न मे काऽपि हानिः। परं प्रमाणीकृतजाया-वचनो यदि भवान् स्थास्यति तूष्णीं तद् भवन्तं वनितावचनानुसारिणं ज्ञास्यन्ति जना अखिला इति देयस्त्वया हृदयेऽवकाशो ह्रिय इति भाति समुचितं मे। विनिश्चितवाक्षु भर्तृषु याति विलयं व्याजो वनितानाम्।

अतो न भवता देयोऽल्पोऽप्यवकाशः कलत्रस्नेहाय । नोचेदधःपतनं ते विलग्नमेव । विनिश्चितपूर्वेऽस्मिन्नघटितेऽपि बलिदाने धर्मोद्धरणमार्गाः परे मे सुविदिताः । तानेवाहमनुसरेयम् । विधिविहितत्वादेवावनतेः शाक्तधर्मस्य राज्ञ आरभ्य सर्वेऽपि मन्दीभूतमतयो मानवाः कुधिय इति नैव विस्मयो मे ’ ।

एवं ब्रुवाणो रुद्रभटो रोषारुणितलोचनश्चरणाहतिकम्पितभूतलः सावेगं निरगात् । तथा निर्गच्छन्तं तमालोक्य नीला दूर एव कोणमेकमाश्रित्यावगुण्ठितानना पर्याप्तं चिरं जहास ।

प्रियपत्नीकायापि यस्मै कस्मैचिन्मानवाय न रोचते पत्नीप्रचोदितधीकतादोषोऽन्यैरारोपितः । अतो रुद्रभटसमुदीरितं वाक्यमस्पृशद् हृदयमर्माग्निवर्णस्य । प्रथमं पुरुषः पश्चाच्च पतिर्भवति नरः । अतः पौरुषेणाहंकाराग्निना प्रज्वलितं हृदयमाग्निवर्णस्य । अतश्च भवान्यैव क्वचिन्निह्नुतो मुराररिति विनिश्चित्य मनसि स भार्याभिमुखं तिष्ठन्नवादीत्–“ मधुरेणैव दर्शय मुरारिं मे । नोचेदुभयोरप्यावयोर्न स्याद् गतिः स्पृहणीया ” ।

भर्तृमुखनिर्गतामाकर्ण्य वाचं परां भुवं दुःखावेगस्योपगता साऽश्रूणि मुञ्चन्त्यवादीत्–‘किमेवमुच्यत आर्येण । किं मे निह्नवेन मुरारेः । अपि च स्वयमेव प्रच्छाद्य तं कथमहं तदन्वेषणपरा भवेयम् ? । क्षणमपि दृष्टिपथातीतं तं न सहेऽहम् ’ ।

**अग्नि०**–बलिदानाद् रक्षितुं तं त्वयैव निह्नुतः सः । स्वयमपह्नुत्य स्वयमेवान्वेषणे समारब्धे निःशङ्का भवन्ति जना अन्ये ।

**भ०**–तत्किं कैतविनीं तर्कयति मामार्यपुत्रः ? ।

**अ०**–काऽत्र संशीतिः ? ।

मुरारेर्गमनेन पूर्वमेव दुःखिता सा साध्वी गण्डस्योपरि पिटिकायमानेनानेन भर्तृकृतेनारोपेण व्रणनिहितज्वलदङ्गारव्यथामन्वभूदवस्थां मनसः । तथाविधां तामालोक्य नीला तदन्तिकमेत्यावादीत्—'एवंविधैव सर्वत्र कृतिः पुरुषाणाम् । स्वयमेवापराध्य प्रभवन्ति ते स्थातुं निरपराधाः । सखि, अहं ते कथयामि—अनेनैवार्येण रात्रौ हारितः केनचिद् भृत्येन ते मुरारिः । निद्रामुपगताऽहमस्फुटमजानां केनापि प्रविष्टं शयनगृहं ते निशायामिति । असंवृतद्वारमासीन्मध्यगृहम् । नराधमेन तेन रुद्रभटेन वशीकृतोऽयं ते पतिः । एष त्वामतिसंधाय मुरारिं बलीकर्तुमिच्छति ' ।

**अग्नि०**—परमत्र ग्रामेऽप्यवर्तमानोऽहं कथं शयनालयं प्रविश्य मुरारिमपहरेयम् ? । अपि बालं जिहीर्षोरपि मे किं प्रययोजनं स्तेयेन ? । पश्यतां सर्वेषामहं तमहन्येव नेतुं शक्नुयाम् ? । तथा कुर्वाणं मां नेयं नान्यो वा जनो निरोध्दुं समर्थः स्यात् । न वा तथा निरोध्दुं कोऽप्यधिकृतः ।

**नी०**—तच्छयनागारप्रविष्टेन भाव्यं तेन रुद्रभटेन नराधमेन । असंशयं स एव दुष्टः प्रविष्टः स्यात् ।

**अग्नि०**—नियच्छ वाचमात्मीयाम् । धर्मगुरुर्मे रुद्रभटः । का त्वमेवं गर्हणे तस्य ? । एत्य गृहं मदीयं प्रतिदिनमस्मद्दत्तेनान्नेनोपजीव्य जीर्णान्यस्माकं वासांसि वसानया त्वया विहितं गुरुभर्त्सनं कथमहं सहेय ? । तदपेहि द्राग् भवनान्मदीयात् । नो चेद् दत्तार्धचंद्रा मे भृत्यास्त्वां निष्कासयिष्यन्ति ।

श्रुत्वैतद् भवानी भयविह्वलाऽभूत् । परं नीला सतालिकं विहस्योच्चैरुदगिरत् "धर्मगुरुः ? । अहो पावित्र्यं ते गुरोः । छिन्नशिरसः पशोरिवास्यान्त्राणि यदा नागदन्तेऽवलंबिष्ये तदा ज्ञास्यसि माहात्म्यं ते

गुरोः । यन्मया भक्षितमन्नं भवने ते तत् केवलमस्या मे प्रियसख्याः स्नेहस्य कृते न क्षुधाकृते । कुतः क्षुधा तस्या योषितो यया पूर्वमेव स्थापितमात्मीयं कलेवरं पितृवनवर्तिनि चितानले ? । अस्ति मे क्षुधा परमितरैव सा । शीलान्मां भ्रंशयतस्तस्य दुरात्मनः कर्मचांडालस्य प्रत्यपकारबुभुक्षया सत्यं सर्वदा पीड्यते हृदयं मे । न जाने कदा सा मे क्षुधा शममेष्यति । अहो कर्माणि धर्मोध्दृतिहेतोरवतीर्णस्यास्य नराधमस्य । अहो, अवतारो धर्मोद्धाराय । बालबलिकर्मणा च सेत्स्यति तदुद्धरणं धर्मस्य । द्रक्ष्याम्यहमपि कथं स मदीयो भवान्याश्च बालो बलीभवतीति " ।

नाकारणमगण्यत जनैर्नीला जनेषु सोन्मादेषु । ईषदापीडितबुद्धिर्हि साऽनेकशो झटिति बहुभाषिणी भूत्वा रुरोद, चुक्रोश, बाष्पं मुमोच, ननर्त च । अधुनापि तया तथैवाचरितम् । अन्ततश्च दीर्घामुत्प्लुतिमवलम्ब्य गृहान्निर्गता सा निःशङ्कं नन्दोटजमार्गमाश्रितवती । प्रभवन्त्येव वाचका ज्ञातुं तर्केण किमभवन्नीलानिर्गमनादूर्ध्वमग्निवर्णभवान्योरिति । उभावापि तौ भवान्यग्निवर्णावन्योन्यं मुरोररपहारिणमशङ्कताम् । भार्या बलिदानाय भर्त्रा निह्नुतो बालो, भर्ता च बलिदानाद् रक्षितुं क्वापि निह्नुतो भार्यया बाल इति शशङ्के ।

नन्दागृहमुपगता नीला स्वमार्गदत्तदृष्टिमैक्षत ताम् । अथ कथं बद्धमूलमभूत् सुखेनैव छलमात्मीयं कथं च केवलं संभ्रमोदर्कं स्वयमेव कलहमुत्पाद्यात्मा निर्दोषो रक्षितो लोकापवादादिति सर्वं यथावृत्तं निवेदितवती नीला नन्दायै । परं हेत्वन्तरमधिकृत्यैवाभवन्नीलां द्राग् दिदृक्षुरद्य नंदा । अतः सा जगाद—"भ्रष्टमतिके, शोभनं जातं यत् त्वं द्राक् प्रतिनिवृत्तासि । पश्यसि किमेतद्धस्तगतं मे ? " इत्युक्त्वा विघटिताद् वसनान्त-

ग्रन्थेराकृष्य दोरकग्रथितामेकां सौवर्णपेटिकां तामदर्शयदवदच्च—अपि जानासि किमेतद्वस्त्विति ? । नीला ससंभ्रममादाय तां पेटिकामूचे—कथमहं विस्मरिष्यामि वस्त्विदम् ? । मुरारिकण्ठगता पेटिकेयम् । अङ्कगते मुरारौ चिरमहमेनामनिशं पाणिना परामृशन्त्यतिष्ठम् ।

**नंदा**—कथमसावत्रस्थिता ? ।

**नी०**—गतायां रात्रावादाविहाङ्के स्थापयित्वा पश्चात् स्कन्धे कृतस्य तस्य कण्ठादसावत्र विस्रस्ता । भवतु । शोभनं जातम् । अभिज्ञानेनानेन वत्सो मे सर्वदा स्मृतिपथे नत्स्यति ।

अयथास्थानस्थितं कोणाग्रमेकं पेटिकाया यथास्थानं स्थापयन्त्या नीलाया हस्तादधः पतितायास्तस्याः सौवर्णपत्राणि विघटितानि तन्मध्याच्च सूक्ष्मसुवर्णाक्षरविलिखितं कार्पासपत्रमेकं निर्गतं नेत्रपथं तयोरुपागतम् । उभे अपि ते तद् द्रष्टुकामे जज्ञतुः । नीलयोद्घाट्य पठितानि तदन्तर्गतान्यक्षराणि । अयमभूत्तस्य पिण्डितोऽर्थः—

## —विजयतेतरां श्रीभवानी—

**भगवत्या महाकाल्याः प्रसादाद् राजामात्यस्य चण्डमतेस्तस्य पत्न्याश्चण्डिकायाश्चायं सूनुश्चण्डभानुनामा शतसंवत्सरजीवी जायताम् ।**

नीलाऽब्रवीत्—“ इयतो दिवसान् पेटिकान्तर्गतस्यास्य वस्तुनो दिदृक्षयापि नास्पदं कृतं कर्हिचिन्मनसि मे । अद्यानया स्वयमेव दूरीकृत्याच्छादनं दर्शितं रहस्यमन्तर्गतम् । मन्ये विधिनियोग एवायमीदृशः । सर्वथा मया मुरारिरित्यभिधीयमानोऽयं बालश्चण्डभानुनामा । महाशक्तेः

प्रसादाद् यथाऽनेन नामद्वयमासादितं तथाऽऽयुरपि द्विगुणं प्राप्तव्यम् । महाकाल्या एव प्रसादाद् मयाऽयमपवाहितो भवनाद् भवान्याः । यथा तथा भवतु । पुनर्नवीकृतामेनां पेटिकां सर्वदाऽहं कण्ठदेशे स्थापयेयम् । तेनचाहं मुरारिमदूरगतं गणयेयम्" इति ।

—इति द्वादशः परिच्छेदः—

## त्रयोदशः परिच्छेदः ।

( कपटनाटकं शाक्तानाम् । )

सहजान्धदृशः स्वदुर्नये
परदोषेक्षणदिव्यचक्षुषः ।
स्वगुणोच्चगिरो मुनिव्रताः
परवर्णग्रहणेष्वसाधवः ॥ १ ॥

मधुरिमरुचिरं वचः खलाना-
ममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्त-
र्गतमिव हालहलं विषं तदेव ॥ २ ॥

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः ।
अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ ३ ॥

( सुभाषितानि )

केनापि निमित्तेनाद्य मृणालिनीसाहाय्यकरणे नियुक्तोऽभूज्जीर्णमन्युः । उभावपि तौ निरगमताम् धर्मसाधनाय प्राभातिकाय । अथाग्निवर्णभवनगामिनं पन्थानमुपनतं वीक्ष्य मृणालिनीमवादीज्जीर्णमन्युः ।

—मृणालिनि, विहायेमं पुरः स्थितं पन्थानमावामनेन दक्षिणपाणिवर्तिना वर्त्मना यास्यावः ।

**मृ०**—किमर्थम् ? । भगवत्याऽवलोकितयाऽद्यतनाय धर्मसाधनाय निर्दिष्टो न किमेष पन्थाः ? ।

**अग्निवर्णः**—अथ किम् । एष एव स पन्थाः । परमस्य नगरस्य मार्गान्तरं दिदृक्षति मे चेतः । येन केनापि पथा प्रयातेऽपि का क्षतिर्धर्मसाधनस्य ? ।

**मृ०**—तस्य पथ आश्रयणं पुनः कदाचिदावश्यकं स्यात् । तत आवां तेन पथा गमिष्यावः । किमित्यद्यैव त्वया त्वर्यते ? विनिश्चितपूर्व एवाद्य पन्था आश्रयणीयः । कारणान्तरं चेत् किमपि तत् स्फुटं ब्रूहि ।

इत्युक्त्वा मृणालिनी व्याजेन जहास । शमधनमुखादासीत्तया श्रुतपूर्वोऽग्निवर्णवेश्माग्रतो वृत्तो व्यतिकरः । परमग्निवर्णवदनादेव तथ्यं निदानं शुश्रूषुः सा बुध्यैवाज्ञानिनीमिवात्मानं दर्शयन्ती तमवोचत्—'धर्मसाधनाय सकृत् त्वया क्षुण्णेऽध्वनि वर्तमानेषु भवनेषु वसद्भिर्जनैर्भूयो भवदागमप्रतिपालनतत्परैर्भावितव्यम् । न तोषाय सकृत् द्विर्वा दर्शनं भवादृशस्य प्रेक्षमाणानाम् । अतो न युक्तं निरुत्साहीकरणमेतावतां मानवानाम् ।

इत्युक्त्वा समाश्रितो मृणालिन्याऽग्निवर्णगृहगामी पन्थाः । तदा 'मनोगतं साध्वसं स्वीयं निवेद्य तस्यै तस्या अपि च मनसि भियं समुत्पाद्य तया त्याजनीयः स पन्था इति कृतमतिर्जीर्णमन्युरुवाच—अलमेतेषु जनेषु कृतेनोपदेशेन । मह्यमेव मोक्षं दातुमासन्नेते समुत्सुकाः ।

मृणालिनी विहस्य वितथं विस्मयमाविष्कुर्वाणाऽप्राक्षीत्—किं वृत्तमिति निवेदयसि ? ।

**जी०**—किं कथयामि । तमःप्रकृतय एते शाक्ता यस्य कस्यापि शरीरे पाणिप्रक्षेपणान्न शङ्कन्ते । महता यत्नेन कथंचिन्मयाऽऽत्मा रक्षितः ।

मृ०—किं तैः स्पृष्टो भवान् पाणिभिः ?।

जी०—न केवलं स्पृष्टः परं प्रकामं ताडितः।

मृ०—शमधनोऽपि ताडितः ?।

जा०—नहि। अताडितोऽवर्तत सः। भगवतो बुद्धस्याभिधान-मुच्चैरुदीरयन्नहं तमविरतं सधीरमकार्षम्।

मृ०—चतुष्पथे दिवा त्वमेवं ताडित इति नैव विश्वसिति मनो मे।

जी०—अयि तथ्यं कथयामि। न वैतथ्यलेशोऽपि वचसि मामकीने। सोढशाक्तप्रहारं मामेव कथं मिथ्यावादिनमाकलयसि ?।

मृ०—भवन्तमप्यक्षीणसारं वीक्ष्य विश्वासविमुखं मनो मे तव वचसि। कामं भवान् पीनस्तुन्दिलाङ्गः। अतस्तैस्ताडिते कथं त्वया पारितं स्थातुं प्रतिकारविमुखम् ?। कस्मिन् कर्मण्यभूद् व्यापृतं पाणियुगं ते ?। किमिति त्वया सोढं ताडनं तेषाम् ?।

जी०—अहो वाक्प्रपंचस्ते ?। समुज्झितमनःशान्तिषु शाक्तेषु किं मयाऽप्यपगतशान्तिना भाव्यमिति मन्यसे त्वम् ?। "शान्तिं भज, अशान्तिं त्यज" इति यदुपदिश्यते भगवत्याऽवलोकितया तत् कथमहं विफलीकरोमि ?।

मृ०—विना हेतुं पीडयतोऽपि पीडा सोढव्येति न कदाप्युपदिश्यते भगवत्या। तथाविधोऽस्मदीयो धर्मः। भवतु। अप्रतिकारं वर्तमानस्य ते कथं तदा जातो मोक्षः ?।

जी०—शमधनेन मोचितोऽहम्। प्रतिप्रहारं 'नमो बुद्धाय' इत्यहमुच्चैरवादिषम्। तेन च संभ्रान्तसमुत्तेजनः शमधनोऽग्रतो भूत्वा करयोरगृह्णात् तं शाक्तं सः। मत्प्रार्थनाप्रभावात् सहसा समुत्पन्न-

सामर्थ्यमभूत् तस्य पाणियुगम् । तेन स प्रहारकर्ता न प्राभवत् मोचयितुमात्मनो हस्तौ तद्धस्तयुगलात् ।

**मृ०**—परं द्वितीयोऽप्यभवत् तत्र कश्चिच्छाक्तः । कथं तत्प्रहारात् त्वं विमुक्तः ? । मन्ये प्रहृतं तेन त्वयीति ।

**जी०**—नहि । अन्यैवावलंबिता मया युक्तिस्तत्र विषये । 'धर्मस्य त्वरिता गतिः' इति स्मृतवचनोऽहं द्राक् चरणवेगमाश्रितवान् ।

**मृ०**—भवतु । तत्र जीवितं तावद् रक्षितमेव शमधनेन । परमेवमाचरता तेन न किमुल्लङ्घितः पन्था धर्मस्य ? । पाणिनियमनान्न किं तेन पीडितः परो जीवः ? । स्वयमेव तेन दिनचर्यालेखेषु विलिख्येदं पापमात्मीयं भगवत्यै कथनीयम् ।

**जी०**—बाढम् । अहं त्वं चोभावपि तस्येदं पापं क्षन्तुं भगवतीमनुनयावः । नानेन हिंसैनसा विलिप्तो भवतु वराकः सः । परं मृणालिनि, सत्यं वच्मि यद् अस्मद्धर्मगतोऽयमहिंसोपदेशो न केवलं शमधनस्य परं भवत्या अपि मनसि नाद्यापि साधु संरूढमूलः ।

एतत् तज्जल्पितमाकर्ण्य मृणालिनी समुद्भूतकोपा परित्यज्य परिहासस्वरं सक्रोधमभ्यधात्—" दह तां शान्तिमात्मीयां जीर्णमन्यो । यद्यहं पुरुषोऽभविष्यं तदहेतुकं पीडयत एतान् शाक्तानशासिष्यम् । न शाक्ता नाम राक्षसा बौद्धा नाम चामानवाः । यदि सह त्वया तदाऽहमवर्त्स्यं तर्हि कटाक्षक्षेपेण केवलेन शाक्तांस्तान् न्यवर्त्स्यम् । "

एतत् सावेशं श्रुत्वा भाषितं मृणालिन्या जीर्णमन्युः पाणिपिहितश्रवणयुगलस्तस्थौ । स उवाच "सत्यं यद्यहं योषिदभविष्यं तच्छोभनमभविष्यत् । यतः पुरुषत्वात् कदाचिच्छान्तिक्षयभीः स्त्रीभावे कार्त्स्न्येन विनष्टा स्यात् । मृणालिनि, यद्यहं योषिदभविष्यं तदसंशयं यथार्थं स्त्रीधर्ममदर्शयिष्यम् "।

एतादृशं निर्ह्रीकं भाषितं भाषमाणं जीर्णमन्युमालोक्य कुण्ठितवाङ्मृणालिनी विषयमेव तं विजहौ। एतावदेव साऽभिदधे—"जीर्णमन्यो, याहि त्वं पथा त्वदीयेन। अहमपि मदीयं पन्थानमाश्रयिष्ये। किमिति मां त्वमनुयासि ?।

जी०—कतमेन पथा यियासिस त्वम् ?।

मृ०—कालभैरवचतुःशालयायिनाऽध्वनाऽहं यास्यामि।

आकर्ण्य कालभैरवचतुःशालाभिधानमाक्रान्तं साध्वसेन हृदयं जीर्णमन्योः। यतः सोऽविरलनिवासः शाक्तविभागोऽभवत् प्रधानः। संप्रति च समंततस्तत्र मुहुर्मुहुर्बहवोऽभ्यहन्यन्त बौद्धाः शाक्तैः।

जी०—सहचारिणि, श्रूयतां वचो मे। न त्वयैकाकिन्या प्रवेष्टव्यं तत् स्थलम्। अतीव भयानकं तत् स्थानम्। अहं तु तत्र पदमपि प्रक्षेप्तुं नोत्सहे।

मृ०—अहो ते भीरुता जीर्णमन्यो। कस्तत्र तिष्ठति यस्त्वामागतं भक्षयिष्यति ?।

जी०—आसीत् पूर्वं मया सह स शमधनः पुरुषः। अद्य त्वमबला किं करिष्यसि ?। तस्मिन्नहनि मयैकेन सोढाः प्रहाराः शाक्तस्य। अद्य पुनरुभावप्यावां सहेवहि। अथवा कश्चिच्छाक्त एत्य नौ देव्युपहारं करिष्यति।

मृ०—ज्ञातं ते धाष्टर्यं जीर्णमन्यो। प्रियमनागमनं ते सह मया। संकल्पितं कार्यमेकयैव मयाऽनुष्ठेयम्।

कालभैरवालयप्रवेशादबिभेद् हृदि जीर्णमन्युः। परमबलाभावेऽपि वर्तमानां मृणालिनीं प्रविशन्तीं प्रेक्ष्य पुरुषमात्मानं सभयं दर्शयितुमलज्जत सः। मृणालिनी धीरप्रकृतिर्वर्तते सहात्मना। क्षमा सा प्रतिकर्तुमपचिकीर्षुं शाक्तभिक्षुमिति मन्वानः स बाह्यतः सधीरो जातः।

परं मृणालिनीपरिरक्षणायैव तया सह गमनमावश्यकमिति दर्शयन् केनचिन्मिषेण तदङ्गश्लिष्टकायो हृदयेन प्रकामं युवतिस्पर्शसुखमनुबभूव । निष्पापतया चेतसो न मृणालिन्याऽलक्ष्यत प्रतिस्पर्शवर्धिष्णुर्मनोविकृतिर्जीर्णमन्योः । तद्रक्षणतत्परमात्मानं दर्शयितुं स तामवादीत्–"मृणालिनि, मा शृणोतु भवती मद्वचः । परं परिरक्षणाय ते मया सहचरेण भवितव्यमेव । अन्यथैते शाक्ता एकाकिनीमिह वीक्ष्य भवतीं कदाचिदवमन्तुमप्युत्सहेरन् । मयि स्थिते सह भवत्या नैते तथा कर्तुं धृष्णुयुः" इति ।

निजपरिरक्षणमधिकृत्य जीर्णमन्युकृतमेतदात्मश्लाघनं नारोचत मृणालिन्यै । साञ्जसैव सतिरस्कारमुदगिरत्–"परिचिता मे भवतो भीरुता । तदलमनेन वृथा विकत्थनेन । आगत एवासीति नयाम्यहं त्वां सह मया । अहमिव त्वमपि विलोक्य व्यवहरणं शाक्तानामात्मानं विनोदयिष्यसि । परं तत्र गतः प्रकटीकृत्य कातरतामात्मीयां मा मामवमानपथे स्थापय । वेषभीषणा अप्येते शाक्ता अशूराः । निर्मलीकृतशिरःकचा, सिंदूरलोहितभालदेशाः, पुञ्जीकृतश्मश्रुकूर्चान् दधाना रक्तवाससः एते शाक्ता भवन्तमेवानुकुर्वते भीरुतायाम् ।

'आः कथं मां भीरुं भणसि?' इत्युक्त्वा जग्राह जीर्णमन्युः पाणिं पाणिनाऽऽत्मनो मृणालिन्याः । स्नेहभूमितां नेतुं तामेतदनेन निमित्तीकृतम् । परं सा सावेगं दूरीकृत्य तत्करं पुरो जगाम । सकोपकटाक्षप्रेक्षणस्यापि तं पात्रं न मेने । किंचिदन्तरं गतायास्तस्या नयनलक्ष्यतामयाद्धर्म्यमेकम् । अतितरामासीन्मलिनतामुपगतो बाह्यभागोऽस्य भित्तेः । गोमयमृत्तिकादिलेपैरासीदियं विलिप्ता तत इतः । रुधिराङ्का अपि क्वचिदलक्ष्यन्त शुष्कीभूताः । पुरतो हर्म्यस्य कथंचित् पाषाणचयनिर्मितो व्यलसदेकः कालिकालयो जीर्णः । पुरः कालिकाया बलिदानहेतोर्हतानां पशूनामाधारतां गतया भाव्यमनया भित्त्येत्यन्वमीयत ।

स्वयमेवोत्प्रेक्ष्य विचिन्वाना मृणालिनी हर्म्यान्तिकमुपायात् । आलोक्यैनां द्वारस्थितः शाक्तः ससंभ्रममुत्थितः सविनयमप्राक्षीत् 'अपि मृणालिनीमेवावगच्छाम्यत्रभवतीम् ?' इति । शिरःकम्पेनैव तया तथेति कथिते बद्धाञ्जलिरिव स मार्गदर्शको भूत्वा प्रोवाच–' इत इतोऽत्रभवती । अत्रभवतीमेवान्तर्भाग उपविष्टाः प्रतिपालयन्ति जना अखिलाः ' इति ।

मृणालिनीप्रविष्टो वेश्मभागो विस्तीर्णोऽवर्तत । महाधनतया वेश्मस्वामिनो नयनहराण्यभूवंस्तत्र सुरचितान्यासनान्यनेकानि । प्रायेणाजिनमयान्यासन्नासनानि, कतिचिदेव क्वचिदवर्तन्त वेत्रमयाणि। महार्हमेकमासीत् कुथासनमास्तीर्णं मध्यभागे । तूलगोलकाश्लिष्टपृष्ठं तत्रोपविष्टं शाक्तयुगलमेकं वृद्धसदृशमदृश्यत । अनतिदूर एवैतस्य युगलस्यासन्नुपविष्टा अष्ट शाक्ता युवानः । वृद्धानामाननानि दीर्घैः परं यूनामपि मुखान्यदीर्घैर्व्यराजन्त एव कूर्चैः । अनतिदूरगतशैशवेऽस्मिन् वयसि कथं प्ररूढं कचैः कूर्चजैरित्येव शङ्कितं स्यात् प्रेक्षकैः । सर्वेऽपि सिन्दूरतिलकभूषितभालभागास्तत्र बभुः । दृष्टिपथमुपगतायां मृणालिन्यां सह तेन वृद्धयुगलेनोत्तस्थुः शाक्ताः सर्वे तत्र संगताः । अथ पृथक् स्थापितं महार्हमेकमासनमलङ्कर्तुं ते तां सविनयं व्यज्ञापयामासुः ।

ऊर्ध्वमुपचारवचनात् प्रकटितमन्दहासस्तेषां वर्षिष्ठः शाक्तो जगाद–" सत्यमद्य वयं धन्या आगमनेनात्रभवत्याः । नूतनस्यात्रभवत्या धर्मकार्यस्यानेकशो यशः श्रुतिपथमापतति संप्रति नः । प्रविश्य मठविहारान् भवदीयान् प्रत्यक्षतां नेयानि भिक्षूणां धर्मकार्याणीति भूयश्चिन्तयन्तोऽपि वयमशरणास्तैक्ष्ण्याद् धर्मबन्धनानां शाक्तानाम् । भवद्विहारस्थितो यदि कश्चिच्छाक्तोऽन्येषां नयनगोचरतां यास्यति तत् परेद्युरेव स जातिबहिष्कृतो भविष्यति । अतो न वयमुपगन्तुं धृष्णुमो विहारान् भवदीयान् । एतदर्थमेवास्माभिरायासिताऽत्रभवतीहानयनेन " ।

मृ०—न मनागपि खेदो मनसि मे यद् भवद्भिरहमेवमाया-सितेति। यद्यपि नादृताऽहं शाक्तधर्मे तथापि बौद्धधर्मोपदेशाय संचरणं भिक्षूणामस्माकं धर्म एव। अन्यच्चैतमुपदेशं वितरन्त्या मे शाक्तान्तः-स्थितिदर्शनेन ज्ञानवृद्धिर्लाभायैव।

वृद्धः शाक्तः—जीर्णतां गतस्यास्य नो धर्मस्य समाजस्य वा दर्शनेन कीदृशी ज्ञानवृद्धिरत्रभवत्याः?। परं महापदप्रदानेन लघूनां साधुतादर्शनेन चासाधूनामुन्नमनमसंशयं भूषणावहं महताम्। मनसा शाक्तधर्मद्वेषिणो भवामो वयं कतिपये शाक्ताः। परं न वयं तथा प्रकाशतां नेतुं शक्ताः। तथा च भवतां तं दीप्रं नूत्नधर्ममपि न वयं स्फुटं परिचेतुं प्रभवामः। तत् कथं शक्नुयाम वयं धर्मान्तरं स्वीकर्तुम्?। परं भाग्यतो भवद्धर्मानुकूलवृत्तिर्भवपुराधिपो महाराजः। यदि भवद्विहारविनेत्र्यवलोकिता भगवती सविशेषं यति-ष्यते ततो महाराजः कदाचित् स्वयमङ्गीकृतबुद्धदीक्षोऽपि भविष्यति। अथवा धर्मविषये स्वातन्त्र्यमुद्घोष्यास्मादृशानां मार्गान् निष्कण्टकान् करिष्यति।

मृ०-तथैव चिकीर्षति भगवत्यवलोकिता। परं शाक्तधर्म-रहस्यज्ञानमधिकतरमेव साहाय्यकृत् स्यात् कार्यकरणेऽङ्गीकृते तस्याः।

शाक्तवृद्धः—'धर्मरहस्यं नामास्माकं नान्यत् किमपि हीना-ङ्गावेक्षणाद्धर्मस्य। लज्जामहे वयं मुखेन तत् स्फुटीकर्तुम्। परमस्म-त्समाजकल्याणोदर्कोऽयं स्वधर्मद्रोहः सानन्दमद्य स्वीक्रियतेऽस्माभिः' इत्यभिधाय रक्तवसनावेष्टितं ग्रन्थमेकं पुरो निधाय स तद्गतानि वच-नानि पठन् शाक्तधर्मसंसक्तान् दुराचारान् ससंवर्धनं वर्णयामास।

गीर्वाणवागनभिज्ञा मृणालिनी ग्रन्थान्तर्गतानां वाक्यानां वर्णि-तस्यार्थस्य यथार्थतामयथार्थतां वा स्वयं विनिर्णेतुमंशतोऽपि न शशाक।

परं ऋजुमनस्का परप्रत्ययनेयबुद्धिः सा वृद्धशाक्तकथितं सर्वं तदच्छलं यथार्थं मेने

ग्रन्थविलिखितानां वाक्यानामर्थमाकर्ण्य निषेधद्योतके भ्रूभङ्गे स्फुटीभवति मुख एतस्याः, 'वयमपि निषेधपक्षपातिन एव' इति दिदर्शयिषवोऽन्येऽन्तिकोपविष्टाः शाक्ता अंतरान्तरा समुद्वेगगिरमुदगिरन् ।

अथाल्पीयसा कालेनैकतः स्थापितपुस्तकः स शाक्तजरठः प्रोवाच—"आर्ये मृणालिनि, यदि शाक्तधर्मदुराचाराणां यथार्थरूपदर्शन एवं स्पृहावती भवती तदबहुभिरेव दिवसैः स्वधर्म इति शाक्तैराचरितानां दुराचाराणां दर्शनसमयः समेष्यति । यदि भवती स्पृहयिष्यति तद्दर्शनाय ततो वयं तथा घटयितुं यतिष्यामहे ।

**एकः शाक्तयुवा**—अल्पैरेव दिवसैः करिष्यमाणं श्रीचक्रोत्सवमधिकृत्य ब्रवीत्यार्य इति मन्ये ।

**वृद्धशाक्तः**—अथ किम् ।

**शाक्तयुवा**—द्विविधः प्रत्यूहो दर्शन एतस्य । एकस्तावदनधिकृता अशाक्ताः प्रवेशे तत्र । अपरं च वेषपरिवर्तनेन तत्र वर्तमानामत्रभवतीं यदि कश्चिदभिज्ञास्यति ततो महाननर्थोपनिपातो भविष्यति । श्रीचक्रोत्सवनिह्नवे हि यावच्छक्यं प्रयत्यते शाक्तैः ।

**अन्यः शाक्तः**—युक्तमेवैतत् । तत्र समाचरितानि हि कृत्यान्यनन्यप्रेक्षणार्हाणि सुतरां गोपनीयानि ।

**मृ०**—यद्येवं तदवश्यं मया तानि द्रष्टव्यानि । तेन हि शाक्तधर्महीनतामधिकृत्य समुत्पन्नप्रत्ययाऽहमवलोकिता च सत्संशोधनाय समुत्पन्नद्विगुणबले भवेत्र ।

**वृद्धशाक्तः**—एतादृशे समाजे परिगृहीतान्यवेषो यदि कश्चिद्द्वितीय एत्रोपतिष्ठेत ततो न स केनापि ज्ञायेत । परमनेकागमनेन-

असा स्फुटीभविष्यति कपटं सर्वेषाम् । अतो यदि श्रीचक्रोत्सवं दिदृक्षुर्भवती ततः परिगृहीतान्यवेषयैकयैवात्रोपस्थातव्यं भवत्या । धर्मसाधनाय यथा यूयं भिक्षवः संघशः पर्यटथ तथाऽऽगमनं न स्यात् क्षेमकरम् । तत् किं धृष्णुयादत्रभवती तत्रागन्तुमेकाकिनी ? ।

मृणालिनी सोत्साहमवदत्—"प्रसादाद् भगवतो बुद्धस्य नैव भयाख्यं वस्तु मे विदितम् । अनिर्भीकेण भाव्यमेव येन केनापि नवधर्मप्रचारकेण"।

तच्छ्रुत्वाऽन्यो वृद्धशाक्तो जगाद "असंशयं प्रशस्याऽत्रभवत्या धृष्टताऽत्र विषये । परमूरीकृत्य वेषान्तरं प्रतिषिद्धप्रवेशे परमेलापके न किं पापाय प्रापणं प्रवेशस्य ?"।

श्रुत्वैतत् क्षणं कुण्ठितवागपि सा द्रागेव सनिश्चयमवोचत्—"सत्यमेतन्मनाग् दोषावहं कपटाश्रयत्वात् । परं भूयसे श्रेयसेऽल्पदोषसमाश्रयणमपरिहार्यम् । श्रीचक्रोत्सवसमाचरितं यद् वर्ण्यते भवद्भिः पापं तेन तुलितं मदीयमिदमन्यवेषस्वीकरणपापमपापमेव । सद्धेतुसाधनाय साधनानां साधूनामसाधूनां वा स्वीकरणं न दोषाय"।

एतदाकर्ण्य प्रथमो वृद्धशाक्तोऽब्रवीत्—"साधु साधु । अमुक्तबालभावेऽस्मिन् वयस्यप्येवं प्रगल्भविचारपाटनपटुर्नूत्नो भवदीयो धर्मो धर्मगुरुश्चेश्वरप्रसादफलमित्येव वयं तर्कयामः । प्रतिकारहेतोरङ्गीकृतोऽधर्म्योऽप्याचारो धर्म्य एवेति यदत्रभवत्या प्रतिपादितं तेन निःशङ्कतां यातानि नो मानसानि । प्राप्ते समये वयमकृतत्वदुपदेशोपयोगा नैवस्थास्यामः ।

ततः कदा कुत्र च प्रवर्त्स्यति श्रीचक्रमहोत्सव इति ज्ञाते न चिरात् शाक्तधर्महृदयमेवात्मसाद् भविष्यति, तौलनिकं ज्ञानमात्मीयं वर्त्स्यति, नवधर्मप्रसारकार्यं चात्मनः सुलभतां प्राप्स्यतीत्यादिभिर्विचार-

मालिकाभिः साल्हादमदृश्यत मुखं मृणालिन्याः । " मयि विश्वस्य निवेदितानि मे स्वधर्मरहस्यानीति सत्यमहमनुगृहीतास्मि । प्रवर्तितव्यं पूतेन नूत्नधर्मेणेति परमेश्वर एव वाञ्छतीति मतिर्मे । अत एव वो द्रष्टुमिहाहमागन्तुमभ्यलषम् । भवन्तश्च सर्वं निःशङ्कं निषेदयितुमुद्यता अभवन् । विपक्षीया अपि सत्कर्मणि कथं सहायतां यान्तीति मयाऽद्यानुभूतम् । श्रेयः प्रयच्छतु वो भगवान् बुद्धः " ।

इत्यभिधायोत्तस्थौ मृणालिनी । तदाऽन्येऽपि शाक्ता उत्तस्थुः । अथ हर्म्यान्तरगता दृष्टिविषयं प्रापिता एतस्यास्ते ते विभागाः । तत्रापि च शाक्तानां विनिन्द्या अवालोक्यन्तानेक आचाराः । यत्र कुत्रापि गतायास्तस्याः शाक्तपथस्थितानां पंचानामकाराणामेकतमोऽभवद् गोचरश्चक्षुषोः । तद्दर्शनविषण्णमुखीं तामालोक्य ते वृद्धशाक्ता अपि सुतरां विषण्णानिवात्मानं दर्शयन्तो दीर्घं निश्वस्योचुः—" आर्ये मृणालिनि, सत्यमेवं वयमास्पदं लज्जाया आचारेण । न विद्मः कदाऽस्मान्मोक्षो नः " इति ।

महाद्वारं हर्म्यस्य पुनरुपगता मृणालिनी तानुद्दिश्य बभाषे— " यत्नसाध्यमिह सर्वम् । कुरुत बुद्धं भगवन्तं चेतसि येन स न चिरात् परिहरिष्यतीमामापदं वः " । इत्युक्त्वा सह जीर्णमन्युना सा हर्म्यान्निरगात् ।

तां सुदूरं प्रस्थापयितुं प्रेषितो दूतो यावन्निवर्तते तावद् विलुप्तपूर्वरूपमन्यादृशमदृश्यत तच्छाक्तमण्डलं हर्म्यगतम् । मुक्तगांभीर्यास्तेऽधुना स्वेच्छालापचुञ्चवोऽजायन्त । आननस्थितं विषादस्थानं विजयश्रियाऽगृह्यत । मितभाषितामपसार्य बहुभाषिता ननर्त । किमधिकम् । आननवर्तीनि कूर्चान्यपि पूर्वाणि क्वचिदासंस्तिरो भूतानि । वराकीं मृणालिनीं कपटजालजिघृक्षुभिस्तैरङ्गीकृताः परित्यज्य तास्ता भूमिका अधुना दूरीभूतयुववृद्धभेदैरन्योन्यं व्यभज्यन्त पानपा-

त्राणि समदिराणि । अपगतरहस्यरक्षणप्रयोजनास्तेऽधुना निःशङ्कमुच्चैर्मिथो जगदुः ।

" किमपि भणन्तु भवन्तः । प्राप्तयौवनेयं कन्यका सुतरां साहसिकी वाक्पटुश्च " ।

" एतादृशि तिरश्चीने पथि स्थितमेतत्तमोबहुलं हर्म्यमेत्यैकाकी शाक्तमेलापक उपवेष्टुं पुरुषोऽपि न सहसा धृष्णुयात् । परमियं विंशतिवर्षदेशीया विश्वस्य वचसि भवतां निःशङ्कमेकाकिनीहोपनता " ।

" विपक्षोऽपि वेत्ति छलयुक्तिमिति न जानाति सा । यदा मया तत्कपटमधिकृत्य बोधिता सा तदा प्रथमं संभ्रान्तचित्तया तूष्णीमस्थीयत तया । अहमपि तदा निर्मलमानसां तां मन्यमानः क्षणं तस्यामादृतोऽभवम् । परं यदा तया, कपटमपि कार्यहेतोः स्वीकृतमपापमेवेति प्रतिपादितं तदा मयाऽज्ञायि यन्नार्हत्येषा मदर्हणामिति । कपटे कपटं प्रयुज्यास्माभिरेतस्यां पराभूतायामस्माभिरवलम्बितोऽपि मार्गो नैव स्यात् सपापः " ।

" नवधर्मप्रसारं सत्कार्यं कलयति सा वयमपि च जीर्णधर्मोद्धरणं सत्कार्यमाकलयामः " ।

" आरभ्यतां तर्हि श्रीचक्रसमारंभेण जीर्णधर्मोद्धरणं शाक्तानाम् " ।

" श्रीचक्रोत्सवार्हणायै क्वचिदेव लाभः कुमारिकाया एवंविधायाः " ।

" अहो मूढता ते । इयन्तं कालमक्षतकौमार्या मृणालिनीति कथमयं मन्यते मन्दमतिरिति न जाने " ।

" एतद् यौवनम्, एतादृशं रूपम्, अहर्निशमभितो भिक्षूणां गणो यूनाम्, प्रकामं स्वातन्त्र्यं विहारेषु योषिताम् । किंबहुना । अन-

यैव नियन्त्रिताः सर्वे तत्र भिक्षवः । अवलोकितायाया एषा मृणालिनी किल दक्षिणः पाणिः । परमतिमनोहरोऽयं पाणिः कतिभिर्भिक्षु-युवभिर्गृहीतः स्यात् स्वहस्त इति किं दुर्ज्ञेयम् ? ” ।

“ यथा तथा भवान् मन्यतां ताम् । परमनूढत्यर्थेन न किं सा कुमारिकैव ? । पर्याप्तमेतावत् । एवंविधायाः कुमारिकायाः श्रीचक्रोत्सवेऽस्माकमुपयोगो न स्यादनुचितः । अथवा मन्येऽर्हतीयं नः श्रीचक्रोत्सवस्य गुणैरात्मीयैः ” ।

“ के ते गुणाः ? ” ।

“ एकं तावत् सा सुन्दरी । अन्यच्च नो विपक्षधुरीणा । अस्याः पावित्र्यनाशनात् कोऽन्योऽस्ति शोभनतरोऽपकारो रिपूणां बौद्धानाम् । यथा नासिकाच्छेदनादखिलमाननं विरूपतामेति तथैतस्यां भिक्षुकुमारिकायां श्रीचक्रोत्सवायासादितायां सर्वे भिक्षुगणा अपकृता एव ” ।

“ परं सर्वमेतच्चिरसाध्यम् । आदौ नः श्रीचक्रोत्सवारंभः । ततस्तस्यास्तत्रागमनम् । ततो यथानिश्चयं तदर्हणानुष्ठानम् । सर्वमेतत् कदा संपत्स्यते न विद्मः । सानुग्रहा चेद् भगवती तदेवैतदखिलं घटेत ” ।

एतादृशाः संकल्पाः । देवीप्रीणनाय चैतेऽभवंश्चिन्तिता अन्ततो धर्म इति । अहो विचित्रं लीलायितं धर्मस्य ! ।

— इति त्रयोदशः परिच्छेदः ।—

—:*:-

## – अथ चतुर्दशः परिच्छेदः ।–

### मन्त्रिवरश्चण्डमतिः ।

बौद्धपक्षपातिनं स्वशाक्तधर्मघातिनं
महीपतिं जना द्विषन्त्यमात्यराजरागिणः ।
चिरं चिकीर्षवो नृपं भवन्तमेव ते ध्रुवं
तदादिश त्वमद्य येन दर्शयेम तं दिवम् ॥१॥

आसीदात्मनो हर्म्ये सुखशय्याधिष्ठितोऽमात्यश्चण्डमतिः ।

गार्हस्थ्यसौख्यवितरणप्रतिकूलोऽभूद् विधिरमात्यस्य चण्डमतेः । भार्या ह्यस्य प्रथमा प्राणप्रिया सह सुतेन सरित्पूरपतिता पञ्चत्वं प्रायात् । अचिरादेवानेन द्वितीया काचित् कन्यकोढा । साऽपि केनचिदपघातेन सहसैव मृत्युनाऽनीयत । अथाञ्जसैव तृतीयो विहितस्तेन विवाहः । परमनभिमतभर्तृचरिता सा नाभ्यलषद् व्यवहर्तुं सहानेन । मदिरामदप्रमत्तनानेनाचरितानालोक्य दुराचारान् समुपजातविद्वेषा सा सकृत् पितृभवनं गता वाराणसीमधिवसन्ती भूयो नैव कर्हिचित् पतिगृहमागन्तुमियेष । एवं विवाहत्रितयेऽपि विहतमनोरथोऽसौ नियत्यननुकूलतां मनसि भावयन् न पुनः परिणयाभिमुखं मनश्चकार ।

शुष्कतां गतायां शाखिशाखायामेकस्यां तद्गतो जीवनरसोऽन्तिकस्थितां यथाऽन्यां पुष्टिं प्रापयति तथैवाभवद् भावनाङ्कुरस्य चण्डमतेः । कुटुंबसौख्यनैराश्यादुच्चपदवांछयाऽस्य हृदि पदमकारि । अल्पेनैव कालेनास्य राज्यलोभस्तथा तीव्रतामयाद् यथाऽसौ 'किमिति मया राज्यपदप्रतिष्ठितेन न भाव्यं' इति विचारमन्तरेण संततं नान्यत् किमपि चेतस्यकार्षीत् । तेन स नगरनरपतिं मनस्यभिद्रोग्धुमारेभे । राज्यपद

प्रतिष्ठितस्य मे विभवः कथं महतीं भूमिं यास्यतीति मनोरथशतैरनिशमवर्तत तस्य हृदयं समाक्रान्तम् । राज्यतन्त्रपराङ्मुखप्रवृत्तिः सर्वदा तत्त्वविचारनिमग्नमना महाराजः । संसारसुखविद्वेषिणी तस्य वृत्तिः । नैनमपुत्रताऽखेदयत् परममोदयत् । तेन राजान्वयवर्तिनो जनाः सर्वे कोऽस्मात् परं वहेद् राज्यधुरामिति विचारेण दिवानिशं व्याकुलितहृदया बभूवुः । राजान्वयसंभवत्वादेव चण्डमतेरमात्यस्य, नरपतावप्राप्तपुत्र एव पञ्चत्वं प्रयाते चण्डमतिरेव राज्यपदमलङ्करिष्यतीति मन्यमानाः सर्वे तं सादरमीक्षितुमारभन्त । तेन च बाह्यतोऽपि तस्य राज्यस्पृहा संप्राप्तसमुत्तेजना प्रतिदिनमवर्धत ।

राज्यपदसंप्रापणविचारैः स संप्रत्यनयन्निशा अखिलाः । अद्यापि स राज्यगतविचारव्यग्रमना एव शय्यायधिशयानोऽवर्तत ।

अत्रान्तरे " नमो बुद्धाय, नमो बुद्धाय " इति वदतः कस्यापि शब्दस्तस्य श्रुतिपथमापेदे । आकर्ण्यैव चकितवृत्तिः स द्वाःस्थमात्मनः समाहूय यावद् बहिरागतं नरं द्रष्टुमादिशति तावद् रुद्रभटः स्वयमेवोपेत्य चिरपरिचित इवान्तिकवर्तिन्यासन एकस्मिन्नुपाविशत् । एवमभूत् तदा संलाप उभयोः ।

" हन्त भोः धर्मगुरुः ! । कति दिनानि गृहीतबुद्धधर्मदीक्षस्य धर्मगुरोः ? " ।

" किमुच्यते कदा गृहीतबुद्धधर्मदीक्षोऽयं रुद्रभट इति ? । नाद्यापि मग्ना मही महार्णवे, न चन्द्रसूर्यौ स्वस्थानमुपनतौ । प्रथमं द्विधा भवेन्मे जिह्वा पश्चादवतरेयुस्तत्र परधर्मसंगतानीमानि दुरक्षराणि " ।

" तत् केनोद्घोषितं 'नमो बुद्धाय' इति ? " ।

" मन्ये प्राप्तविकृति श्रुतियुगलममात्यस्य । अथवा राजाधिकारवर्तिभिरपि भवद्भिर्येयममंगला घोषणाऽनुमन्यते बुद्धानां तस्या एव भाव्यं प्रतिध्वनिना श्रुतिपथं भवतामापतितेन " ।

"तत् किमुक्तं प्रविशता धर्मगुरुणा ?"।

"किं मयोक्तं 'नमो बुद्धाय' इति ? पूर्वमेव मयाऽयं 'उ'कारो नगरादस्मान्निष्कासितः स्यात्। परं क्वास्ति राजाधिकारो मदधीनः ?। ये राजाधिकारधारिणस्ते पुनः शान्तिसागरा एव। 'नमो बद्धाय' इत्येव केवलं मया भणितम्"।

"आम्। परमेषाऽपि नूत्नैव प्रणामपद्धतिरद्य किमर्थं प्रवर्तिताऽऽर्येण ?। व्याकरणशुद्धमेतद् वाक्यम्। परं 'बद्धः' नाम कः ? कथं चाहं बद्धः"।

रुद्रभटो भूयो विहस्योवाच—"सत्यमेवेदम्। अदूरवर्तिनी मुक्तिर्ज्ञातस्वस्वरूपस्य। परमेतदेव लक्षणं बद्धस्य यत् सर्वदाऽसावविज्ञातस्वस्वरूप एव"।

"पुनरपि तत्त्वज्ञानव्याख्यानमारब्धमार्येण। नास्ति धर्ममार्तण्डानां भवतामकालो नाम पाण्डित्यदर्शनाय। पाण्डित्यदर्शनप्रकृतय एव प्रायेण सर्वदा भवन्तो धर्मगुरवः। परं रूक्षं राज्यतन्त्रमन्तेरण नान्यत् किमपि मया ज्ञायते। अतः प्राञ्जलिरहं पृच्छामि 'कथमहं बद्ध' इति। अनुगृह्णातु मामार्योऽज्ञं विशदीकरणेनार्थस्यास्य पदस्य"।

**रुद्रभटः**—अहिफेनसेवनेनेव राजभक्त्यतिशयेन मोहमुपगता मतिरमात्यराजस्य। स केवलं राजभक्तिमीक्षते। परं कथमवमदत्तावकाशमस्य हृदयं स्वपरजनहितविचारस्येति विस्मयन्ते जनाः सर्वे।

"गरीयसी राजनिष्ठा व्यक्तिहितादिति नानुचितं यदधिकतरं पक्षपाति मे मनोऽस्यामिति। परं प्रजाहितोदासीना वृत्तिर्मदीयेति यदुच्यते तदतितरां पीडयति मानसं मे। नृपस्येव सस्नेहं हृदयं मे प्रजास्विति साभिमानोऽहम्"।

"अभिमानसदृशं कर्म समाचरन्तमेव भूपयत्यभिमानो नासदृशकर्मिणम्"।

" किमभिमानदूषकं मया कर्म समाचरितम् " ।

" सचिव एव राजकृतानां शुभाशुभानां कर्मणां फलविषये प्रष्टव्यतामेति शास्त्रवचनात् ' ।

" कथमिव ? "

" ईशांशभूतो वर्तते नरपतिः । न चेशः कर्हिचिच्छुभमशुभं वा वितरति प्राणिषु । परं राजोपदेशे, सत्कर्मानुष्ठापने, असत्कर्मनियमने च राज्ञः सचिव एवाधिक्रियत ईश्वरेण । स्वाधिकारानुरूपव्यवहरणार्थमेव प्रतिमासमस्मै दीयते वेतनमनल्पं, बहुमन्यते च स सर्वैः सर्वत्र । अन्यथा किं प्रयोजनं महाव्ययेनैतेन । अतः स्वकर्तव्यक्षमेणैव स्थातव्यं सचिवपदे सचिवेनान्येन च तत् दूरतो वर्जनीयम् । अथवा —

" किमन्यदपि भवति किंचिदनुष्ठेयम् ? "

" भवति । दूरीकृत्य राजानं राज्यपदात् स्वयं राज्यतन्त्रस्वीकरणम् । अन्यथा कथं प्रजाहितमतिरमात्यस्य ज्ञायेत प्रजाभिः ?। मन्त्रिपदपरित्यागो दुर्बलैः स्वीक्रितोऽध्वा, बलाद् राज्ञः कर्तव्ये स्थापनं बलिनां मार्गः, अननुष्ठानतत्परस्य च राज्ञो राज्याद् भ्रंशनं बलिष्ठानां पन्थाः । तदेतेषु यस्य कस्याप्याश्रयणे पथः प्रभवत्यमात्यः " इति ।

राजनीतिमीमांसामेतामाकर्ण्य प्रस्फुरितमना जज्ञेऽमात्यवरः । अनुकूलाऽननुकूला वा मनोवृत्तिः प्रजानां निजराज्यपदस्वीकरण इति स प्रागेव जिज्ञासुरासीत् । अतः स्वयमेव रुद्रभटेनोदीरितामेतां वाचमाकर्ण्य समुत्पन्नमोदः स पुनरपि तद्हृदयगतान् विचारान् विज्ञातुमभिलषन्नाबभाषे—" वयस्यवर, सचिवधर्मप्रकारा भवत्कथिताः सनातना एव । परं केन पथा प्रयातव्यं मयेति नाद्यापि सनिश्चयं मनो मे । अधिकारन्यासो मदधीन एव । तदनुष्ठानेन कर्तव्यपरतां दर्शयितुमहं सर्वदोद्यत एव । परमुपायद्वयस्यानुसरणे कियदानुकूल्यं दर्शयेत् प्रजाजन इत्यावश्यकं ज्ञानं प्रथमम् । प्रजाक्षोभदर्शनमपि कदाचिदलं स्यात् सन्मार्गस्थापनाय

राज्ञः । परं राज्यत्याजनायावश्यको युद्धसंभारः । यदि जनाः सज्जाः कर्तुं साहाय्यं मे तदहं क्रमेणोभावपि मार्गावनुसर्तुमुद्यतो भवेयम् " ।

" सज्जं क्रान्तिकरणायैतन्नगरमखिलम् । तत् कियन्तं कालं स्वबलोपेक्षणाय स्पृहयत्यमात्यः ? । नगरसिंहासनसमासक्तं धर्मद्रोह-कलङ्कमेतं कियच्चिरं परिरक्ष्येत? । कियन्तं चावधिं नवेष्वनुभूयमानेषु शाक्तोपद्रवेषु शयानेन स्थीयेत ? " ।

" को नु नूतनः समुत्पन्न उपद्रवोऽत्र नगरे ? । नाद्यापि स कर्णपथमुपगतो मे " ।

" आसीत् देव्याज्ञया समुद्यतः स्वालयस्थं कुमारं बलीकर्तुं नगरश्रेष्ठ्यग्निवर्णो नाम । शाक्तधर्मद्रोहिणा स केनचिदपवाहितः । मन्ये बौद्धभिक्षुणैव भाव्यमेतत् कृतवता केनापि । एकमप्येतद् बलिदानं यदि पूर्णतामयास्यत् तर्हि संप्रति मलिनतां गतोऽस्मदीयो धर्मोऽ-भूतपूर्वामुज्ज्वलतामगमिष्यत् । देव्याज्ञानुष्ठानगुणाच्च शतगुणफलम-भविष्यद् बलिदानमस्मदीयम् " ।

" किमुच्यते 'अग्निवर्णस्तद्भार्या च निजपुत्रं बलीकर्तुमुद्यता-विति' ? " ।

" आम् । न स एतयोरौरसः पुत्रः । परिवर्धितोऽसावेताभ्याम् । परं सुतनिर्विशेषमज्ञायत स ताभ्याम् । महापूरप्रवाहवाहितः किलासौ संप्राप्त एताभ्याम् । "

" अपि देव्यैवाज्ञप्तं तस्य बलीकरणम्? " ।

" अथ किम् । नात्र संदेहलवोऽपि " ।

" देव्यैव बलीकर्तुमाज्ञापिते न केवलं परिपालितं परं स्वाङ्ग-संभूतमपि पुत्रं समर्पयितुं न तौ दंपती संदिहेयातामिति विश्वसिति मे हृदयम् । सृष्टिरपि धारयति शिरसाऽऽज्ञां देव्याः किं पुनर्मानवः ।

महाप्रवाहे नद्या वाहिता गेहिनी मे देव्या आज्ञयैवेत्यपि विश्वासो मे । एवमेव शिथिलीभूतधर्माचारान् मानवान् केनचिदतिमानुषेण हेतुना मुहुर्मुहुः स्मारयन्ति कर्तव्यं देवा देवता वा ”।

“एषोऽपि व्यतिकरोऽद्यैको हेतुरमात्यदर्शने मे। आवश्यकमस्माकं साहाय्यं राजपुरुषाणामन्वेषणाय तस्य बालस्य । यदि स केनचिद् बौद्धेनापवाहितः स्यात् तर्हि राजाज्ञामप्युल्लङ्घ्य बलिदानहेतोरार्येण सोऽस्माकं हस्तं प्रापणीयः ” ।

“ इमामवस्थां गते तस्मिन् व्यतिकरे भवन्मनोरथपूरणायामात्यो भवेदेव समुद्यतः । परं राज्यक्रान्तिसमुद्यताः संप्रति प्रजा इति यदत्रभवता प्रोक्तं तन्न मया सम्यग् ज्ञातम् । अतः प्रसीदतु भवांस्तत् स्फुटीकर्तुम् ” ।

“ बौद्धधर्मनिर्मूलनगृहीतदीक्षमेनं रुद्रभटं कथमत्रविषयेऽद्य यावच्छयानमवधारयति मन्त्रिवरः ?। तथैवामात्यादपि वयमुत्सुकतरा राजपदप्रतिष्ठितं द्रष्टुं मन्त्रिवरमति नार्हति विस्मर्तुमार्यः ” ।

“ तत् कथं बाह्यचिन्हहीनोऽद्यापि वः समुद्यमः ? ” ।

“ केवलमनुज्ञाऽमात्यस्य प्रत्यूहोऽत्र विषये । न सन्ति सैनिकाः संग्रहे मे। परं कृतनिश्चयोऽहं येन केनचिन्मे शिष्येणापि तत्सिंहासनं लीलयैव रिक्ततां नेष्यामि ” ।

“ कथमिव ? ”

“ विदितमेवामात्यस्य यदकृतस्वशरीरचिन्तो महाराजः सदा निःशङ्कं चरत्यकिङ्करः । मन्ये बुद्धसंघं प्रवेष्टुकामोऽयं वैराग्यव्रतमभ्यस्यति । बलिदाननिपुणपाणिर्मे छात्रः कश्चिदासिप्रहारेणैकेनास्मान्मृत्युलोकाद् दिवं प्रापयिष्यति ” ।

"मामैवं वाचाऽपि वक्तव्यमार्येण । उभयपार्श्वनिशितधारः खलु खड्गो राजहत्याख्यः । अपकृष्टस्यापिहि राज्ञो न सहन्ते वधं प्रजाः । राज्यक्रान्तिः पुनर्नैवमनर्थकरी"।

"भवतु । यदि न संमतोऽमात्यस्य वधो राज्ञस्तत् कथ्यतां कथं प्रजाप्रकोपपावकं प्रदीपितं दिदृक्षत्यार्य इति । सकलमपि नगरं वर्तते मया सज्जीकृतम । आवश्यके क्रान्तिकरणे न कोऽपि शक्तो मनागपि संदिहेत । गूढसंमेलनेऽनुयायिनां मयैतदनेकशोऽस्ति परीक्षितं सम्यक्"

एवमाश्वासितोऽमात्योऽपि प्रकृत्यैव हृदयमात्मीयमाविष्कर्तुमुद्यतोऽभूदिति नैव विस्मयावहमत्र । सोऽवादीत् —

"अन्ये गुणाः सभानां रहोगतानामन्ये च प्रकाश संगतानां महासभानाम् । गूढसभायां यथेष्टं भाषमाणा वक्तारः प्रभवन्ति दर्शयितुं धैर्यं निरवधिकम् । परं न तथा कर्तुं पार्यते महासभायाम् । तत्र हि प्रोक्तं सकृद् वज्रलेपायते वचो वक्तुः । न तद् भूयोऽन्यथा कर्तुं शक्यते । ह्रेपयति जनांस्तथाकरणम् । अत एव ते महासभासु सावधाना मितभाषिणो भवन्ति । तथैव संश्लिष्टपरिमितजनहितं गूढसभासंगतं सभ्यानाम् । अतः कैतविनो जनाः शक्नुवन्ति वञ्चयितुं कतिपयान् कैतवेन । महासभायां सत्त्वात् कैतववेदिनां जनानां न चिरात् स्फुटीभवति कपटमेतेषाम् । मैवं मंस्था यदहमविदितभवद्गूढसभाव्यापार इति । भवतोऽप्यभितश्चरन्त्येव मम चाराः । अतोऽहं कथयामि ते यद् गूढसभायामतिक्रान्तमर्यादमाभाषमाणा मानवाः समये समवधीरितप्रतिज्ञा भविष्यन्ति । तद् यथा बहवः शाक्तधर्मानुयायिनः प्रकाशं संगंस्यन्ते तथा विधाय सभायां परधर्मानुरक्ततां राज्ञोऽधिकृत्य स्फुटं निषेधो दर्शनीयः । ततश्च शिष्टमंडलमेकं राज्ञोऽन्तिकं प्रेषणीयम् ।

स्थिरमेवासनं मे सर्वदा समीपे राज्ञः । यथाकथितं विधाय गतेषु युष्मासु परस्तात् करणीयमहं सुखेन साधयिष्ये । अतो भूयः कथयामि भवन्नायकत्वाधिष्ठितां कारयत शाक्तानां महासभामेकाम् । महत् ते तेजः प्रतिहन्ति संप्रत्यपि चक्षूंषि जनानाम् । एषा च महासभा तदुज्वलतरतां नेष्यति । एतावानेवात्र मे हेतुर्यद् येन केनापि विधिना प्रत्यक्षीकृत्य प्रक्षुब्धं मतं सामाजिकं परित्यक्तस्वाग्रहे महाराजे संप्राप्त-समीहिता एव वयम् । विपरीते त्वस्य राज्यक्रान्तेरध्वनोऽनुसरणाय न्याय्यं निदानमस्माकं करगतं भविष्यति " इति ।

— इति चतुर्दशः परिच्छेदः —

## -- पंचदशः परिच्छेदः --

( शाक्तपरिषत्समुद्यमः )

बौद्धद्विषो येऽत्र भवन्ति सर्वे
तान् वैदिकान् ब्रूत सखींश्च वित्त।
प्रशस्य देवान् सुचिरं तदीयान्
महासभां कारयत द्रुतं स्वाम्॥ १ ॥

वयं वैदिका आगता वैदिकानां
यथामन्त्रणं संसदं, नो परेषाम्।
यदीयं सभा शाक्तसंघैकहेतो-
र्न कार्यं ततो नोऽनया, द्राक् प्रयामः ॥२॥

"बौद्धसंघसभयेव भवतामपि महापरिषदा यथाभिधानमति-महत्या भाव्यम्" इति यदुपदिष्टममात्येन तत् संमतमभूद् रुद्रभटस्य। व्यवहारे हि सर्वदा संख्याबलमतितरां प्रामुख्यमावहति। अपि चासन्न-पंचविंशतिवयस्काऽपि बौद्धपरिषद् यदि विदूरतोऽपि सहस्रशः समागतै-रत्र समलंकृता भवति बौद्धभिक्षुभिस्तर्हि तत्रैव संगताऽल्पजनसमाकुला शाक्तधर्मपरिषत् स्फुटं प्रकटयेन्न्यूनतां वैदिकधर्मस्येति विचार्य रुद्रभटः पर्याकुलमना जज्ञे। नास्या विपदः परिहारः सुखसाध्योऽभूद् रुद्रभटस्य। बौद्धधर्मो हि संघटितस्वरूपः समाश्रितैकमार्गः। परं वैदिकधर्मोऽ-संघटितोऽनेकाङ्गः। सर्वत्र लब्धराजाश्रयो बौद्धधर्मः प्रतिकूल-पार्थिवश्च शाक्तधर्मः। अतः "कथमेतत् संख्याबलं भवेत् समासा-दितमस्माभिः" इति पृष्टोऽमात्यराजो जगाद-"सखे, संप्रति शाक्त-

हितैकदृष्टयः सर्वे यूयम् । सुमहानयं प्रत्यूहः संख्याबलसमासादनस्य । अतो भाव्यं सुविशालदृष्टिभिर्भवद्भिः "।

"कथमिव ?"

"एकीकरणेन सर्वेषां बौद्धधर्मविपक्षाणाम् । सर्वेऽपि बौद्धधर्मविपक्षाः सुहृद्बुद्ध्या भवद्भिर्द्रष्टव्याः । प्रमुखेऽपीह शाक्तधर्मेऽन्यपथानुयायिनो नरा अपि न सन्त्यबहवः "।

"परं कथमेतेषामेकीकरणं शक्यमेतस्यां परिषदि ? । भिन्नान्येतेषामुपास्यदैवतानि, असमानाश्च धर्माचाराः । अन्यच्च सर्वेऽप्यन्योन्यविद्वेषिणः । तत् कथं शक्यमामलकानामिवैतेषां पिण्डीकरणम् ?"।

"एतदेव तावद् घटनाचातुर्यसाध्यम् । कामं सन्त्वेतेऽन्योन्यविद्वेषिणः । परं न किमखिलेष्वप्येतेषु प्रस्फुरति बौद्धधर्मद्वेषः ? । तत् स्वीक्रियतां प्रथममेकं वस्त्रमेतत् तेषां पिण्डीकरणाय "।

"परं सर्वेषामेकीकरणे संपादिते सर्वानुरूपमभिधानमप्यन्यन्न किमावश्यकम् ? । यद्यपि सर्वे वयं द्वेष्टारो बौद्धानां तथापि तथा नामकरणे लघिमानमुत्प्रेक्षिष्यन्ते बहवः । अतो विद्वेषिणामप्यस्माकं यथा हृदयगतो द्वेषो न स्फुटीभवेत् यथा च स लीलया संवृतः स्यात् तथाविधमेकं सर्वानुरूपमन्वर्थकमभिधानं किमपि चिन्तयस्वमात्यराज: "।

"चिन्तितपूर्वमेवैतादृशं मयाऽभिधानम् । कथय किमर्थं विद्विष्महे वयं सह तैर्बौद्धधर्मम् ?"।

"नूत्नेनानेन धर्मेण प्रत्नेऽस्माकं वैदिके धर्मे सर्वतः प्रहृतमिति "।

"तत् स्फुटमेवैतत् । वैदिकधर्मद्वेष्टृभिरपि तैर्यथा 'बौद्ध' इति स्वीकृतमभिधानं तथैव बौद्धधर्मद्वेषिभिरप्यस्माभिः 'वैदिक' इति स्वीकरणीयमभिधानम् । अतो भाविनी परिषद् 'वैदिक–परिषद्' इत्येवाभिधातव्या । महत्यस्मिन्नेकस्मिन्नभिधानेऽन्यानि सर्वाणि तानि तानि लघून्यभिधानानि विना विरोधं संप्रविष्टानि भवेयुः"

“ सम्यङ्मन्त्रितममात्यराजेन । केवलमेवं कुर्वतामस्माकं शाक्ताभिधानमीषद् गौणतां यास्यति —”

“ महाकार्यकरणसमुद्यतैः स्वाभिधानाभिमानः कंचित् कालं दूरीकरणीय एव। काऽन्या गतिः ? । परं वयमेव सर्वथा नेतार इति शाक्तानुकूलमेव प्रायेण सर्वमिह संपत्स्यते । माऽत्र विषये भाव्यं भवता ससंदेहेन । यद्येषा परिषद् राज्यक्रान्तेर्मातृतां यास्यति तद् राज्यारूढो नूत्नो नरपतिर्विहायान्यान् क्षोदीयसो धर्मपथान् समाश्रितशाक्तपथ एव भविष्यति । तेन च शाक्ता एव लब्धराजाश्रया भविष्यन्ति ” ।

“ परं तथा जातेऽन्ये समुपजातविषादा भवेयुरित्यत्र किं प्रतिविधानम् ? । अस्मल्लब्धसाहाय्यैः सपत्नकल्पैरेभिः शाक्तैः साधितः स्वीय एवोत्कर्ष इति न किमन्ये मन्येरन् ? ” ।

“ मन्येरंस्तथा ते । परं किं तेन ? । महद्भिर्बलवद्भिः सह कार्यं कुर्वाणैरबलैरेतत् करणीयमेव स्वहृदये यद् विना द्वेषवुद्धेरुपशमाद् न कोऽप्यन्यः संप्राप्येत लाभोऽस्माभिरिति । द्वेषोपशमोऽपि च नाल्पो लाभः । न हि स्पर्शसुखलिप्सया समाचरति कण्डूयनं मानवः किन्तु कण्डूपनिनीषयैव । न शोणितस्पृहया दशति दंदशूको जनान् कृतस्पर्शान् किन्तु निर्यातनकाङ्क्षयैव स्वापकारस्य प्रत्यपकारेण ” ।

“ परं कथमन्वेषणीया एते वैदिकधर्मानुयायिनो निखिला नगरेऽस्मिन् ? ” ।

“ यैर्नाद्याप्यङ्गीकृताऽनुयायिता बौद्धानां ते सर्वेऽप्यात्मीया इति द्रष्टव्याः, तेषां पन्थानः स्तोतव्याः, आत्मीयतामुत्पादयितुं तेषु ‘ भिन्ना अपि धर्ममार्गा अस्मदीयास्ते सर्वे वेदप्रभवा इत्यखिला वयं वैदिका अभिन्ना एव ’ इति ते सावेशं पुनः पुनरभिधातव्याः, तदुपास्यदेवतावर्णयित्री वैदिकी काचिद् ऋक् पुरस्तेषां सादरं पठनीया,

यदि न भवेत् स्मृत्युपस्थिता ऋक् तथाविधा तत् स्वयं रचयितव्या। वेदविषये हि तेऽस्मादृशा अज्ञानिन एव। यदि कश्चित् वेदविद् वदेत् ‘न वेदान्तर्गतैषा ऋक्’ इति तद् झटित्येव कथयितव्यम् —‘अनन्ता वेदाः। को गतः पारं वेदानाम्?। परं न किमेषा ऋग् वर्णयति वैदिकीं देवतां भवदीयाम्?। वर्णनमेवैतद् द्योतयति सत्यतां देवतायाः। अनन्यप्रमाणा वेदाः। यूयं वयं च सर्वे समदुःखाः संप्रति। अत आवश्यकमेकमत्येनावैदिकधर्मस्य निःसारणं नः’। एवमभिहिते ते सर्वे परिषत्समुद्यता भविष्यन्ति”।

“अथ ‘लब्धनृपाश्रया भवतु परिषदस्मदीया’ इति रुद्रभटेन भाषितेऽमात्येनाभाणि—सूचयिष्याम्यहं तथा। परं कीदृशः प्राप्येताश्रयो युष्माभी राज्ञः?। केवलं न भवत्वसौ परिषत्प्रतिकूलः। अपरं च वयं कथमपि राजक्षोभाभिलाषिण एव। स च क्षोभोऽस्यां परिषदि स्यात् सुलभः। नैकहस्तप्रभवा तालिका। हस्तान्तराहतिकाङ्क्षिणी सा। कथं घटनीयं तदित्यहं चिन्तयिष्यामि। यूयं तावत् स्वोद्योगपरा भवत”।

एवममात्येनोपदिष्टो रुद्रभटः संवर्धितोत्साहः स्वस्थानमेत्य न चिरात् स्वसमीपवर्तिभिश्छात्रकल्पैर्जनैरनेकैर्नगरनिवासिनः शाक्तेतरानखिलानन्वेषयितुमारेभे।

*　　　*　　　*

“अलब्धनृपाश्रयायै परिषदेऽस्यै श्रेष्ठिवर एवार्हति दातुमाश्रयं स्वीयम्” इति रुद्रभटोक्तं वचनमनुग्रहधियैवाङ्गीकृतमग्निवर्णेन।

अस्यां हि परिषदि शाक्तधर्मोद्धृतौ पूर्णतां प्रयातायां बलिदानसंतर्पितशक्तिरहं प्रसादाद् भगवत्याः प्राप्य पुत्रमौरसं सह भार्यया भवान्याऽऽनन्दसागरनिमज्जनसुखमनुभविष्यामीति विचारैः स भूयो भूयो मोदपरवशीभूतचेता अवर्तत।

स्वार्थ–परार्थ–परमार्थकरीयं स्यान्मे परिषदिति मन्यमानोऽग्निवर्णो विघटितात्मवित्तग्रन्थिर्धनवितरणाज्ञाप्रतिपालनपरस्तस्थौ । “आवश्यकं निष्कसहस्रद्वयं परिषदमिमां पूर्णतां प्रापयितुम्” इत्युक्तमात्र एव रुद्रभटेन झटित्यग्निवर्णेन तदधीनतामनायि तावान् धनचयः । अथ विनिश्चितो महाकालीमन्दिराभिमुखो विस्तीर्णो भूविभागः संमेलनाय परिषदः । सर्वतो निर्मलीकृतेऽस्मिन् स्थले निर्मितो न चिराद् विशालो मण्डप एकः । अनतिदूर एवास्य मण्डपस्य परिषत्संप्राप्तप्रतिनिधिनिवासहेतोर्विरचितानि निवासनिकेतनानि लघूनि सारामस्थलान्यनेकानि । ग्रामान्तरप्राप्तेषु शाक्तेषु यदि केचिन्महा नैवेद्यदित्सया बलिदानसमुत्सुका भवेयुस्तदकालहीनं ते परिपूरितमनोरथा भवेयुरिति धिया स्थिरीकृत्य वधस्तम्भद्वितयं प्राङ्गणगतं पुरातनं बहिर्विभागेऽन्यदपि निखातं वधस्तम्भयुगलं नूतनम् । एवं सज्जीक्रियमाणेष्वखिलेषु परिषत्संभारेषु ‘यथा यथा वयं परिषत्समुद्योगव्यापृतास्तथा तथा वर्धतेतरां कालिकाननकान्तिरनुक्षणमिति मेनिरे बहवः शाक्तभक्ताः ।

आगामिदिनद्वयान्तरिते परिषत्संमेलने महाकाल्यालयसंगतानां बहूनां वैदिकानां देव्यभिधानविभववैपुल्यमधिकृत्य मुहुर्मुहुरभवन्ननेके विवादाः । निजजिह्वाग्रगतानि देवीनामान्यन्याधिकानीति दिदर्शयिषवोऽहमहमिकया प्रोच्चैः पठन्तो बहवः परप्रोक्तानां देवीनाम्नामुच्चारणाल्लघिमानमुत्प्रेक्षमाणाः स्वकपोलकल्पितानि बहून्यश्रुतपूर्वाणि नवानिनामानि साभिनयं पठन्तोऽतिमहान्तं कोलाहलं चक्रुः ।

देवीनामोच्चारतत्परतया बहूनामन्यदेवतानामानि साशङ्केन मनसाऽल्पजनसमुदीर्यमाणानि न कस्यापि श्रुतिपथमारुरुहुः । शाक्तशासितत्वात् परिषत्कार्यजातस्य विविधदेवतोपासका अपि ते परिषत्समागता वैदिका देव्यालयाभिमुखस्थिता देवीमन्दिरमभितो देव्याज्ञैव

प्रभवतीति मन्वानाः, शाक्तानां च पुरोऽन्यदेवतास्तुतेः शाक्तकोपमुत्प्रेक्षमाणाः सहान्यैः केवलं कालीनामघोषणपरास्तस्थुः ।

अथ महामण्डपान्तिकवर्तिनि लघुमण्डप एकस्मिन् परिषदभिधानमधिकृत्य सुचिरं प्रावर्तत महान् विवादः । बहून्यश्रूयन्त तदोपदिश्यमानानि निजदेवताभिधानानि तत्र संगतैः सभ्यैरनेकैः । " वैदिकपरिषत्समामन्त्रिता वयं सर्वे । अतो 'वैदिक–परिषत्' इत्येवाभिधातव्या परिषदेषा " इति विदूरागतः कश्चित् प्रतिनिधिरसूसुचत् । परमाकर्ण्यैतत् स्फुटवाक् कोपनप्रकृतिः कश्चिच्छाक्तयुवा बभाषे–" शाक्ता निमन्त्रका अस्याः परिषदः, शाक्ता अत्र धूर्वोढारः, शाक्तैर्व्ययीकृतान्यत्र धनानि स्वीयानि, शाक्तोऽत्रत्यो नरपतिः, शाक्तानामयमखिलो भूविभागः, किंबहुना, कयापि दृष्ट्या विचारिते सर्वथा शाक्तप्रामुख्यात् " शाक्त परिषत् " इत्येवैषा परिषदर्हत्यभिधानम् " इति । शाक्तप्रशंसामेतामाकर्ण्य परां भुवमुपागमन्मन्युवेगोऽन्येषां प्रतिनिधीनाम् । परिकरं बध्नन्तस्ते पृथुतरीकृतलोचनाः कोपकम्पिताङ्गयष्टयः सावेशं जगदुः–

" नेयं तदभिधानं परिषदः सत्यतां यदुपयुज्य वयमाहूताः । केनचिन्मिषेणाहूय कार्यान्तरसाधनमन्याय्यमेव । अपि च यैर्वयमाहूतास्तैस्तु स्वस्यैव कार्यसाधनं नाम परा कोटिरधमतायाः " ।

" सामान्यमेवोपयुज्यतेऽभिधानं निमन्त्रणे प्रायेण । परं प्रागारंभात् परिषदस्तदभिधानं सूक्ष्मेक्षिकया चिन्तनीयमेव । सामान्योऽयं नियमः परिषदः प्रायः सर्वेषामेव विदितः । अस्यापि येऽनभिज्ञास्तैर्दूरस्थितैरेवात्मा रक्षणीयः परिहासात् " ।

" विदितमस्माकं माहात्म्यं शाक्तानाम् । संप्रति तु स्मृतिशेषकल्पं तदाघाताद् बौद्धानाम् । अत एवैतेऽपेक्षन्ते साहाय्यमस्मत् । ग्राम्यैः खञ्जपशुभिरुपान्त एव ग्रामस्य भक्षणीयानि तृणानि निसर्ग-

निर्मितानि । न प्रवेष्टव्यानि तैः क्षेत्राणि परेषां ससस्यानि । स्वविभवदिदर्शयिषया किमिति वयं विदूरस्थिताः समाहूताः ? । अस्माभिरपि कारिता अनेकाः परिषद एवंविधाः । अभिज्ञा वयमेतासामखिलस्य व्यवहरणस्य " ।

अथ वर्धनोन्मुखं वीक्ष्य विवादं सौम्यप्रकृतिः कश्चित् समसूसुचत्-- " सविशेषणद्वयं विधायाभिधानं साधनीयमुद्दिष्टमभीष्टं परिषदः " इति। बहूनां संमताऽभूत् कल्पनैषा । परमन्ये जगर्जुः--" वैदिक " इत्येकं विशेषणं युक्तं संमतं च । परं ' शाक्त ' इति विशेषणेन भूयो योजितेऽभिधाने शाक्तपथ एव केवलं प्रामुख्यं याति । तत् किमेवं मन्यन्ते भवन्तो यदन्येषामस्माकं वैदिकानां पन्थानोऽपन्थान एवेति ? । यदि ' शाक्त ' इति स्वीक्रियते विशेषणं भवद्भिस्तदन्येषामपि पथ कतिचिदन्यान्यपि विशेषणानि योजनीयानि ।

" अहो, निखिलपथाभिधानविशेषणसंयोजिते नामनि परिषदः परिषन्नामोच्चारणमप्यशक्यं स्यादन्येषाम् । किमेतादृशेन नाम्ना प्राप्येतास्माभिः ? " इत्यभिधाय भूयो विचारिते " शाक्त--वैदिक " इति विशेषणद्वितयेनैवान्ततो बहुमतविनिश्चितेनाभावि ।

अथ शाक्त-वैदिक पदयोः केन विशेषणपदेन भाव्यं प्रथमेन केन च द्वितीयेनेत्यधिकृत्य भूयो बहवः कलहाय बद्धपरिकरा बभूवुः । ततश्चार्थनिर्णयहेतोः समाहूता अधीतव्याकरणशास्त्रा अपक्षपातिनः पण्डिता महान्तः । ' शाक्त--वैदिक परिषत् ' इति वाच्यमिति केचिदूचुः । परं तथाऽनुष्ठानपरिपन्थिनोऽन्ये निषिध्य जगदुः-- वैदिकपदं प्रथमं योजयित्वा ततः शाक्त पदे योजिते न वयमन्तरा प्रतिबध्नीमः । सर्ववैदिकसंमतामिमामालोक्य सूचनां धूर्तः कश्चित् वैदिकः सहासं तानुद्दिश्याबभाषे--" अये चूर्णीकृतानामिदं वः समर्पणं गोधूमानाम् । वैदिकशाक्तपरिषदित्यभिहिते वैदिका

ये शाक्तास्तेषामेवेयं परिषदिति न किं स्फुटीभवेदर्थः ? । अतो वैदिक-परिषदित्येवाभिधातव्यम् । तथा कृते कैश्चिदस्मासु कदाचिद्विहितः शाक्तत्वारोपोऽपि सुखं सह्येतास्माभिः" इति । अथ मध्यस्थावभासिना-केनचिद् गभीराकृतिना प्रतिनिधिनाऽभाणि—"विनाऽव्ययं योजित-मेतदभिधानं नोभावपि युवां कृतार्थतां प्रापयति । अतो वैदिकानां शाक्तानां च परिषदिति पृथक् प्रवक्तव्यमिति मतं मे" इति ।

"हन्त भोः साधीयसीयं युक्तिः । इत्यनेके सशिरःकम्प-मुदगिरन् । परमज्ञसैवैकेनाभाणि—न मनागपि साध्यते यथार्थमभीष्टं युक्त्यैतया । तथा कृते हि भिन्नाः शाक्ता वैदिकेभ्य इति न किमन्यैर्ज्ञायेत ? । न भवन्ति वैदिकाः शाक्ताः शाक्ता वा वैदिका इति तु नास्त्येव । तत् किमर्थमुभावप्येतौ विभज्येते पृथङ्निर्देशेन नाम्नोः ? । किमैक्यसाधनायोत मिथो विघटनाय सकलोऽयं परिषदायासो वः ? ।"

एवमष्टौ यामान् यावत् परिषदभिधानमधिकृत्य प्रववृते प्रति-निधीनामुपागतानां विवादः । शुष्कतां गताः सावेशं परिवादकराणां कण्ठा अनेकेषाम् । असकृद् बभूवुरन्योन्यप्रहारसमुद्यता बहवः । त्रिषेदुः केचिद् भिन्नमस्तकाः । अन्ततोऽमात्यविनिर्णीतं "समस्तवैदिकपरि-षत्" इत्यभिधानमिति कथिते परित्यक्तकलहैः सर्वैरेकमत्येन तदङ्गी-कृत्य कथमपि विनिश्चितः क्रमः कार्याणां सह समयेन संसदः ।

## इति पञ्चदशः परिच्छेदः

---

## —षोडशः परिच्छेदः—

### (समस्त-वैदिक-परिषत्)

श्रेष्ठः सुरेषु गणराडिति गाणपत्याः
प्रोचुर्निषिध्य शिव एव तथेति शैवाः।
आद्याऽत्र शक्तिरिति शाक्तगणा जगर्जु-
रादित्यमूलमगदन्नखिलं च सौराः ॥ १ ॥

प्रागेव समयात् परिषदो विविधवैदिकपथानुयायिनामनेके नायका नानावसनवेष्टिताङ्गा विविधलक्ष्मधराः समुपाजग्मुः। तानालोक्य सुतरां तुतोषाग्निवर्णः। "परिषदमिमामधिकृत्य सर्वेऽप्येतेऽत्र बुद्ध्यैव संगच्छन्ते। वैदिकधर्मसंस्थापनं हेतुरस्याः परिषदः। यास्यत्यत्र श्रेष्ठतां पन्थाः शाक्तानाम्। तथात्वे गते शाक्तपथे भविष्यत्यपरिहार्यो विधिर्बलिदानस्य। तथाभूते तु न नृपोऽपि प्रभविष्यति परिपन्थितामुपगन्तुं बलिदाने मुरारेः। विना विघ्नमनुष्ठिते बलिविधौ प्राप्तबहुपुत्रा मे भार्या जीवत्पुत्रका भविष्यति। ततश्चाहं सह भार्यया स्वयं सुखभाजनं भूत्वा कृतसकलधर्मकार्यः सर्वेषां प्रशंसास्पदं भविष्यामि। सर्वस्यास्य मेऽभ्युदयस्य निदानतां गतेन व्यवहारकुशलेन धर्मनिष्ठेन मे प्रियसुहृदा रुद्रभटेन सर्वथाऽहमतितरामुपकृतोऽस्मि"। एवं चिन्तयतोऽग्निवर्णस्य चेतसि भूय उदभवन् विचाराः—"श्रीमानपि वैश्यकुलसमुत्पन्नोऽहं हीन एव धर्मकार्यनिरतेभ्यो ब्राह्मणेभ्यः। ब्राह्मणा एव तत्त्वतोऽधिकृता धर्मकार्ये। त एव सर्वेषु श्रेष्ठाः कर्मणि तस्मिन्"। एभिर्विचारैर्मनाक् पर्याकुलमना ऊरीकृतनम्रभावोऽग्निवर्णः सभागृहद्वारविभागे प्रबद्धाञ्जलिरधोमुखोऽतिष्ठत्।

अनेन प्रसङ्गेनाग्निवर्णं विनीततरं चिकीर्षू रुद्रभटस्तमवोचत्– “ अग्निवर्ण, चिरमभवस्त्वं द्रष्टुकामो वैदिकधर्मानुयायिनां नायकान् । मदाज्ञासंप्राप्तानेतांस्त्वमधुना शनैःशनैरात्मदृष्टिगोचरान् करिष्यसि । भवत्कल्याणचिकीर्षव एते धर्मगुरवः समुद्यताः स्वपथाभिमानमपि परित्यक्तुम् । मन्ये सर्वथा भविष्यति भवानचिरादग्रणीर्भाग्यभाजाम् ” ।

महोपकारभावनाभरविनम्रीभूतोऽग्निवर्णो गद्गदस्वरः स्वैरमभाणीत्–वयस्य, भवदनुग्रहैकमूला सर्वा मे भाग्यसंपद् आगामिनी । कियदिव कथं वक्ष्यहं तां मुखेन ? ।

प्रमुखासनलिप्सया प्रथममुपगतः कश्चिन्महाङ्गो महाशैवः सभागृहं प्रविवेश । सहानेनाभूवन्ननेके स्वस्वपक्षनायका अन्ये शैवाः । तद्यथा–(१) आद्यशैवाः–उभयोरपि हस्तयोरेतेषां तप्तमुद्राचिन्हानि बभुः । (२) रुद्रशैवाः–त्रिशूललांछितमभूल्ललाटमेतेषाम् । (३) अग्रशैवाः-ढक्कालंकृतमभूत् करयुगमेतेषाम् । (४) भट्टशैवाः–सलिङ्गप्रतिममासील्ललाटमेतेषाम् । (५) जंगमशैवाः–कण्ठावलम्बितलिङ्गप्रतिमा एतेऽभूवन् । (६) पाशुपतशैवाः–भालवक्षोनाभिपाणिष्वेतेषां लिङ्गमुद्रा अदृश्यन्त । (७) दशनामिकाः–दश दण्डानेते दधुः । नाल्पीयसीमपि भीतिमजनयन् पूर्ववर्णिता दशविधाः शैवाः । परमेतेऽन्त्या कदाचित् कोपात् प्रहरेयुरित्युत्प्रेक्ष्य जना दर्शनादेतेषामबिभयुः ।

ऊर्ध्वबाहुनामानः केचिदभवन् । सर्वदोर्ध्वीकृतभुजानामेतेषां शुष्कीभूता भुजाः सततमूर्ध्वस्थापिता नौकादण्डा इव विरेजुः । आकाशमुखाः केचिदभवन्–एते सर्वदा सूर्याभिमुखास्तस्थुः । पूर्वस्यां दिशि संप्रवर्तमानायां सभायां यदि सविता पश्चिमदिशालंकारभूतः स्यात् तदेते पश्चिमाभिमुखाः सभामधिकृत्य जगदुः । अन्यं गोलार्धं निशायां प्रविशत्यादित्य इत्यजानाना एते पुरा मेनिरे यद् निशायामदृश्येनात्मनो

रूपेणायं भूयः पूर्वां दिशमेत्य प्रातः प्रकटीभवतीति । अतस्ते निशायां सूर्यगतिप्रमाणं स्वयमेवोत्प्रेक्ष्योत्प्रेक्ष्य सर्वदा सूर्याभिमुखास्तस्थुः ।

परमेतेषु महाशैवानुयायिषु केचिदघोरपथाः कापालिकाश्च दर्शनादेव सर्वान् भाययामासुः । 'शक्तेरेव वयं परमार्थतोऽनुचराः' इति मन्यमानैरेभिर्वेषभूषणादिष्वात्मनो देव्या एवानुकरणमतितरामक्रियत । मुक्तकेशाः सिन्दूरचर्चितभालदेशाः कपालमालाधारिण एते सभागृह-समुपविष्टा अपि मुहुर्मुहुः कन्थाया आत्मनः समाकृष्य नरमांसशकलं निःशङ्कं चचर्वुः । केचित् बिल्वफलनिहितमादाय चिताभस्म मुहुर्मुहुः साभिनयं स्वाङ्गानि लिलिपुः । केचिद् रुद्राक्षमालाजपमभिनिन्युः । केचिद् करकलितबिल्वशाखा मुखमभितश्चामरवद् धूनयांबभूवुः । कश्चिदर्धचन्द्रविभूषितशिरा गृहीतार्धनारीनटवेषोऽलक्ष्यत ।

शैवान् अनु सहात्मनोऽनुयायिभिः प्रविवेशात्र महावैष्णवः । शैवशाक्तानामिवैतेषामनुयायिनां वसनेषु नाभाद्वैचित्र्यमतितराम् । केवलं विष्णोरवतारदर्शकानि धनुर्बाणपरशुगदादीन्यनेकानि चिन्हान्यासन् धृतानि । कश्चिदात्मानं चतुर्भुजमदर्शयत् केचित् । शंखचक्रगदामुद्राङ्कैः स्वाङ्गानि भूषयामासुः ।

अथ सौरा गाणपत्या अन्ये च विविधपथानुयायिनो निज-देवताद्योतकानि तानि चिन्हानि धारयन्तः क्रमेणोपाजग्मुः । अग्निज्वाला, चन्द्रकला, अश्वत्थशाखा, शुण्डादण्डः, नक्षत्रपुञ्जः, आम्रमंजरी, सूर्य-बिम्बम्, सर्पवलयम्, इत्यादीनि तदानीं प्रवर्तमानानां सर्वेषां वैदिक-धर्माणां प्रतीकानि परिषद्येतस्यामालक्ष्यन्त । शाक्तबाहुल्यान्नागराणां शाक्ता एव बहवोऽत्र बभूवुः । परममात्यचोदितेन रुद्रभटेनान्येऽपि वैदिकधर्माणो बहवो विचित्य विचित्य समाहूयन्त । अनपेक्षित-मेतदामन्त्रणमाकर्ण्य स्वगणवेषविरचने त्वरमाणा अपि स्वल्पतया कालस्य कथं कथमपि संपाद्य यथासमयमासन्नेते संप्राप्ताः ।

अनंतरं प्रविवेश लंबोदरमहाभागः । 'गणराजो जयति जयति गणराजः' एतावन्मात्रमेवाविरतमुद्गिरन्नसौ शनैर्गणपत्याकृतीनक्षान् गणयति स्म ।

रुद्रभटो बभाण—"अपि स्वास्थ्यं सर्वत्र ?"

**लंबोदरः**—अथ किम् ? । गणराजकृपया स्वास्थ्यं सर्वत्र ।

पूर्वागतत्वादसौ गत्वा निःशङ्कमुच्चैरासनमधितष्ठौ । तदालोक्य मनागस्वास्थ्यमुपगतोऽप्यगतिकतया स्वस्थान एव स तूष्णीमासीत् किं केनासनं स्वीकरणीयमिति नासीदेव व्यवस्थापितपूर्वमनेन ।

आसनमधितिष्ठत्येव लंबोदरमहाभागे सौरपथानुगो धर्मगुरुरागत्यान्यदुच्चैरासनमलंचकार । चित्रित–प्राभातिक–सूर्यकिरणकलापां कन्थामुद्वहताऽनेन सह परिचयं शिष्टाचारानुमतं जनयितुं रुद्रभटो लंबोदरमहाभागमुद्दिश्य जगाद–"एते सौरपथानुयायिनो धर्मगुरवः । कृतार्था वयमागमनेनैतेषाम्"। धर्मगुरुरुवाच–"साधु । सर्वेषां हितं साधयति देवः सविता । सर्वेषां तेजसां चैतन्यस्य चासावधिष्ठानम्"।

**अग्निवर्णः**–सत्यमेवैतत् । अत एव सवितारमाद्यं दैवतं मन्यन्ते जनाः ।

एतदाकर्ण्य संजातमन्युर्गाणपत्यो लंबोदरमहाभागः साधिक्षेपमवोचत्–"नैतत् स्यात् कर्हिचित् संमतं मे । नास्ति कोऽपि देवगणे गणपतेः श्रेष्ठतरो देवः । पतिरसौ सर्वेषां देवगणानामित्येव गणपतिरित्यभिधानमेतस्य । केवलमेष सूनुः श्रीमहादेवस्येति वयं शंकरं गणपतेः श्रेष्ठतरं गणयेम"।

**सौरः**–नैतत् संमतं मे । सूर्यस्य पुरतः स्वयं शंकरोऽपि यदि लघीयांस्तत् का मात्रा गणपतेः ? । प्रशस्यते सविता वेदेषु न महादेवो गणपतिर्वा । उपवेदे पुराणे वैतयोः संभवति निर्देशः । उदयाभिमुखः

सवितैव ब्रह्माऽस्ताभिलाषी च स एव विष्णुः। दिनमध्यगतः सवितैव शिवः। भवतु वैष्णवः शैवःवो वा। उभयोरपि गायत्रीमन्त्रेण सूर्योपस्थानमावश्यकमेव।

अत्रान्तरे श्रुतपूर्वोक्तभाषणः समुपजातमन्युः कोऽप्यपरः शैवधर्मगुरुरुपेत्य साभिनयमुवाच—" किमिह शिवगर्हणपरा यूयम्? । इमां ममोपास्यदेवतां निन्दतो जनस्य छेत्स्ये जिह्वामेवामूलात्। विना प्रामुख्यात् कथमसौ प्रोच्येत 'महादेव' इति?"।

सौरः—दिनमध्यगतो भानुरेव चण्डत्वाच्छिव इत्युच्यत एतत्तु सत्यमेव। तत् काऽत्र संभवति निन्दैतस्य?।

शैवः—मैवम्। निरूपयन्तु भवन्तः पुराणानि निपुणम्। सूर्यो नामाष्टमूर्तेः शिवस्यैका केवलं तनुः। अंगांगिभावस्याप्यनभिज्ञा भवन्ति भवन्तः।

अत्रान्तरे समीप एव वर्तमानो वैदिकपरिषद्व्यवस्थापकः कोऽपि रुद्रभटनियुक्तस्तूष्णीं स्थातुमपारयन् सूर्यशिवमहादेवगणपत्यादिषु देवेषु कोऽपि प्रामुख्यं यास्यत्यस्मिन् विवाद इति भिया स्वयमुपसृत्य मध्य एवोवाच—" त्रयोऽपि यूयमयथार्थवादिनः। परिषत्सेवकोऽप्यहं नात्मदेवताभिमानपराङ्मुखः। महीयान् महादेवो गणपतेरित्यैकमत्येनैव विनिश्चितं भवद्भिः। तथैव शिवः सूर्यात् सूर्यो वा शिवाद् स्याद् गरीयान्। परमाद्यैषा दुर्गा माता मूलशक्तित्वात्सर्वासां देवतानां श्रेष्ठतमा। अत एवास्माकं शाक्तानामयं पन्था वैदिकविभागेऽस्मिन् राज्येऽप्यद्य यावदविनष्टोऽवर्तत"।

एतदाकर्ण्योच्चैर्हसन् शैवगुरुरभिदधे—"त्वयैवात्ममुखेन स्फुटीकृतो न्यायः। देवीयं शक्तिरप्यर्धमङ्गं शिवस्य। तदपि च वाममङ्गमबलम्। अतो यदुच्यते भवद्भिस्तदज्ञानादङ्गाङ्गिभावस्य"।

श्रुत्वैतच्छाक्तः प्रत्युवाच—" अहो कीदृशोऽत्राङ्गाङ्गिभावः ? । मन्येऽनेन शैवबटुना न कदाचिदपि ध्याता शक्तिर्देवी । नैषाऽध्यास्ते वाममङ्कं भर्तुः परमविरतमस्य वक्षसि नृत्यतीयम् । तद् ब्रूत को महीयान् शिवशक्त्योः ? । एवं शिवेऽपि हीनतां गते का मात्रा सूर्यगणपत्योः ? " ।

अत्रान्तरे शुभ्रवसनधरः कोऽप्युपेत्य बभाषे—"अहो तिष्ठतैकतः सर्वे यूयम् । अधीत्य वेदान् भवन्तो ज्ञास्यन्ति यद् द्यौरेव वैदिको देवः सर्वेषां महिष्ठ इति । पिताऽयमन्येषां निर्जरसाम् " ।

" अहो प्रभावस्ते देवस्य ! । तस्य पत्नी मेदिनी परित्यज्य तमूरीकृतस्वातन्त्र्याऽधो न्यवसत् । उषा तद्दुहिता नर्तकी जाता । मरुदग्निसूर्यादित्यादिभिः पुत्रैः पृथक् पृथक् स्थापितानि राज्यान्यात्मीयानि । अतोऽसौ संप्रति वृषभ इव वृद्धो व्याक्रोशपरस्तिष्ठति । राज्यभरसहेषु सुतेषु स्थातव्यं तूष्णीमेव पितृभिः । न तैरायासयितव्यो राज्यचिन्तयात्मा स्वीयः । तद् यथा तथा भवतु । नायं देवः प्राप्नुयात् पुरस्कारमस्मत्तः ।

अथारुणवसनवासाः कश्चिदाययौ पुरतः । तारकानुकारिणा सतेजसेकेन लम्बाकृतिना विभूषितमभून्मणिना ललाटमेतस्य । स आह— " किं वृथा कलहेन ? । अहमेतन्निर्णयामि । शिवशक्त्यादित्यादीनि सर्वाण्युपदैवतानि । कानिचिच्चैतेष्वनार्याण्यवैदिकानि । पश्यन्तु भवन्तो यदूर्ध्वमुदयादरुणस्य प्रभवत्युदेतुं सविता । तत एव चारभ्यन्ते पूजनानि देवतानाम् । अतो मन्येऽरुण एवात्र पुरस्कार्यः । जलौषधीनामरुणोऽधिपतिः । रुचिरस्यन्दनादिरूढोऽसौ प्रेक्षते हिताहितानि मानवानामखिलानाम् " ।

" परं येनाक्ष्णा प्रेक्ष्यन्तेऽनेन तेऽरुणेन सर्वेषां हिताहितानि स सूर्य एव, महाराज । दूरीकृतेऽस्मिन् सूर्ये कथमरुणराजो भवतां प्रभविष्यति शासितुं राज्यमात्मीयमिति स्फुटमेव । तद् भवत्वेतत् । सूर्य एवार्हत्यग्रमानम् " ।

"परमरुणो राजा सम्राडित्युच्यते"।

"अग्निरिंद्रोऽपि चेमां पदवीं धारयतः। मित्रसाहाय्यादेव प्राप्यते बहुमानोऽरुणेन"।

"परमनन्यलब्धया मायाशक्त्याऽयमुपेतः"।

"एतदेवासुरीं संपदं द्योतयति न दैवीम्। अत एवापहृतमरुणस्याधिपत्यमथर्ववेदेन। केवलं 'स्वर्गे मे निवासः' इति कथनेन कः स्यात् भुवि वरुणे सादरः?। किं तथा स्तूयते पुराणेषु वरुणो यथा महेन्द्रः?। तिष्ठत्वयं तत्र सुखं सौवर्णे स्वरथे"।

लब्धावसरो रुद्रभटो दूरीकृत्योच्चैरासनानि शनैः शनैः सर्वाणि समतामनैषीत्। अथ यथाकथितमाययुर्विविधपथानुसारिणोऽनेके क्रमेण धर्मगुरवः। तैरपि समारब्धो धर्मकलहः। पूरितं कर्णपरुषेण कोलाहलेन सभागृहमखिलम्। परस्परवधोद्यता इवालक्ष्यन्त बहवः। अत्रान्तरे संप्राप्तोऽमात्यराजः। तद्दर्शनेन कलहाद् विरताः सर्वेऽपि राजप्रतिनिधिरयं राजवद् देवतारूप एवेति धियाऽहमहमिकया दर्शितादरास्तस्थुः। अथ कर्णान्तिकसमानीतेनाननेन रुद्रभटकथितं किमपि समाकर्ण्योन्नततममासनमासीनोऽखिलानुद्दिश्य जगाद—"अहो किमेतत्?। किंनिमित्तकोऽयं कलहो युष्माकम्?"।

**रुद्रभटः**—"कामं समये संप्राप्तोऽमात्यराजः। अन्यथा नासमहं समर्थः शमयितुमिमं कलहम्"।

**अमात्यः**—किमिहान्योन्यकलहायागमनं भवतामुत विपक्षसमुन्मूलनायाविचारितान्योन्यपथभेदमायोधनोपकरणसंभारसमाहरणाय?।

**गाणपत्यः**—येन केनापि हेतुना संप्राप्ता अपि न वयं कर्हिचित् समुद्यताः श्रोतुं गर्हणमुपास्यदेवताया अस्माकम्।

**सौरः**—धर्मकार्ये साहाय्यं कर्तुमुद्यता वयमिति किमेतद् त्रितीर्यते भवद्भिः पारितोषिकमस्मासु ? ।

**शैवः**—यदि गरीयसी शक्तिः शिवात् तच्छाक्तैरेव संगम्य सा स्वव्यसनवारणार्थं प्रार्थनीया । किमर्थमस्मानाहूय पुरोऽस्माकमेवं प्रतिपाद्यते श्रेष्ठतरता शिवाच्छक्तेः ? ।

तच्छ्रुत्वाऽमात्यः प्रोच्चैरुवाच—" सुहृदः, प्रोत्कटमिमं स्वोपास्यदेवताभिमानं भवद्धृदयवर्तिनमालोक्य सत्यं मोदतेतमां मानसं मे । परमेतावदेव खेदयति मां यत् कलहकालानभिज्ञाः सर्वे यूयम् । सखायः, भिन्नाः सन्ति सर्वेषां धर्ममार्गाः " ।

**गाणपत्यः**—एवमेतत् कोऽत्र दोषः ? ।

**अमात्यः**—भिन्नाः सर्वेषां वो देवता उपास्याः ।

**सौरः**—अत एवायमेतावान् कलहः ।

**अमात्यः**—अपि च परंपरापुनीतानि भवत्पथनामान्यपि भिन्नान्येव ? ।

**शैवः**—बाढम् । स्वपथनाम्नोऽप्यभिमानोऽस्माकमत्याज्य एव ।

अमात्यकृतां विविधपथप्रशंसामिमामाकर्ण्य समुत्पन्नभी रुद्रभटः किमपि विवक्षुरमात्यश्रवणसंसक्तमुखो जज्ञे । विज्ञाय तदाशयं " स्मर्यते मया सर्वम् । अलं चिन्तया " इति सूचयताऽमात्येन मनागिव प्रपीड्यास्य पाणिं पुनरभाणि—" भिन्नाः सर्वे यूयमेतत् संमतं मे । परं भिन्नेष्वपि भवत्स्वन्ततो नित्रसत्यैक्यमेवेति न साकल्येन विजानन्ति भवन्त इति मन्ये " ।

अन्त्येनानेनामात्यवचनेन यथेष्टमाश्वासितो रुद्रभटो बभाण—" तथ्यमेवामात्यभाषितम् । सर्वे वयं भिन्नाः । भिन्नताभिमानोऽप्यस्मदीयः

समुचित एव। परमभिन्नमूलाऽस्माकं भिन्नतेत्यजानद्भिरस्माभिरद्य यावद् बलात् समाकृष्याङ्गारान्नष्टकल्पतां नीतो धर्मो वैदिकः"।

अमात्यवचोविरोधाभासमजानन् मन्दधीः शैवः प्रोवाच—"भिन्ना अपि वयमभिन्ना एवेति कथं ज्ञायते भवद्भिरिति नाहमत्रगच्छामि"।

**अमात्यः**—नैतद् दुर्बोधमतितराम्। श्रूयताम्।

अमात्यमुखनिर्गतमन्त्यं वचनमाकर्ण्य रुद्रभटः सोत्साहं सर्वानुद्दिश्य बभाषे—"शृणुत सावधानं सभ्याः। अतीवोपकारकोऽयं कलहोऽद्यतनः। एतस्मादेव भाग्येनाद्य ज्ञास्यन्ति भवन्तोऽमात्यमुखविनिर्गतानि कतिचिन्नूत्नानि धर्मतत्त्वानि। तदेकाग्रेण मनसाऽकृतकोलाहलं श्रोतुं प्रसीदन्तु भवन्तः"।

**अमात्यः**—सत्यमेतद् यद् युष्मासु सन्ति केचित् सौराः, अपरे गाणपत्याः, अन्ये शैवाः, इतरे वैष्णवाः, परे च शाक्ताः। तथापि यथार्थतया विचारिते न किमभिन्ना एव सर्वे भवन्तः?।

स्वानुकूलमेव देयमेभिः प्रत्युत्तरमिति साभिनयममात्येन पृष्टा अपि ते जडतया बुद्धेः, प्रोत्कटतया वाऽहंकारस्य नांशतोऽपि विविदुराशयममात्यस्य। किमेतदुच्यत इति दर्शयन्तस्ते शून्यदृष्टयोऽन्योन्यमुखमीक्षमाणा जडा इवाविदितवाक्यार्था मुहुर्मुहुरमात्याननमवलोकयामासुः।

अथ भूयो भाषितुमारभतामात्यः। संभ्रान्तो विपक्षो नाम सुखसंप्राप्यो मृगयापशुरेव। गण्यते वावदूकेन। अतः स्वमतानुयायिनो विधातुं सभ्यानभिलषन्नगदत् "सुहृदः, सन्तु कामं भवन्तो भिन्नपथानुयायिनः सर्वे। परं न किमेकाश्रयसमुत्पन्नाः सर्वेऽप्येते पन्थानः?। शिवविष्णुशक्तिसूर्यगणपत्यादयः सर्वा अपि न किं वैदिका एव देवताः?। समानादुदराज्जाताः कलहायमाना भ्रातरो भवन्तु प्रकामं मिथो रिपवः।

किन्तु परमार्थसाधने तावत् भवितव्यमुदारमनोभिरखिलैः । अदत्तान्तराः पादपशाखा यदि सर्वदाऽन्योन्यघर्षणपरा जायेरंस्तत्समुत्पादितवैश्वानरास्ता न चिरात् सहात्मना तं सकलमपि पादपं भस्मतां नयेयुरिति, न वेद्मि, कथं विस्मर्यते भवद्भिः । अवर्तमानेषु रिपुषु स्वपक्षमाहात्म्यप्रतिपादनप्रयत्ना मिथः कलहा वा भवतां भवेयुः क्षम्याः । परं कथमेतदविदितं वो यद् वैदिकधर्मनिर्मूलनाय बद्धपरिकरा बौद्धाः सर्वत इति । वेदनिन्दका एते बौद्धा इति प्रथितमेव । वेदनिन्दा नाम न किं गर्हणं सर्वेषामप्यस्माकं वैदिकानां पथां विविधानाम् ? ।

**लंबोदरः**—अहो सत्यम् । नासीदेतत् समुत्पन्नं मते मे ।

**सौरः**—सत्यमेतत् । बौद्धा एव यथार्था नो रिपवः ।

**अमात्यः**—अत एकस्यापि विपद् सर्वेषामेवेति चिन्तनं न किमावश्यकं वः ? ।

**शैवः**—सत्यं सर्वेषामेव सा । काऽत्र संशीतिः ? ।

**सौरः**—परं कीदृशी विपदुपनताऽद्य ? । कश्च परिगतोऽनयाऽत्र ? ।

**रुद्रभटः**—वयम् । शाक्तेष्वस्मासु स्वधर्मपरेषु बौद्धा एते समुद्यता निर्मूलयितुमाचारानस्मदीयान् ।

**लंबोदरः**—कथमिव ? ।

**रुद्रभटः**—देव्यां बलिदानं वितरितुमुपदिशति नः शाक्तपथः । परं तथा विधातुमुद्यतेष्वस्मासु बौद्धा एते स्वीकृतविपक्षभावा राज्ञि निवेद्यान्यानस्माकमनुयायिनः प्रतिकूलमतान् विदधति ।

**सौरः**—कीदृशं बलिं वितरितुमास्त यूयमुद्यताः ? ।

**रुद्रभटः**—किमेतत् पृच्छयते ? । बलिर्नाम बलिः । धर्मगुरूपदिष्टो बलिः । देवीप्रार्थितो बलिः । नरबलिदानचिकीर्षवोऽपि किमर्थं

वयं परैर्दूषणीयाः ? । न मेषशीर्षमालाधारिणी देव्यस्मदीया । नरकपाल-मालां बिभर्त्येषा ।

नरबलिदानकथामाकर्ण्य सौरशैवगाणपत्यादयो धर्मगुरवः संभ्रान्तचित्ताः परस्परमुखावलोकनपरास्तस्थुः ।

सौरः–हिंस्यन्ते मानुषेतराः प्राणिनः पुरो देवतानां बलि-हेतोरिति विदितं नः । परं......

शैवः-स्यात् कदाचित् संमतं नरबलिदानं वैदिके काले पूर्वस्मिन् । किन्तु........

रुद्रभटः–अहो निःशङ्कं समाचर्यत नरबलिदानं सर्वैः पूर्वम् । प्रथितैवैतरेयब्राह्मणवर्णिता नरबलिदानकथा सर्वत्र । उदरव्यथामात्मीयां शमयितुं स्वकीयमेव पुत्रमाहुतीकर्तुमासीत् समुद्यतः पिता तत्र । अने-नास्मत्सुहृदाऽग्निवर्णेन बलिदानहेतोः सज्जीकृतो नासीत्तदीयोऽपि सूनुः ।

सौरः–पूर्वकालसंमतास्त आचाराः किं संप्रत्यपि समाचरणीया एव ? ।

रुद्रभटः–पूर्वकालसमाचरितानामाचाराणां यथाविधि पुनः समा-चरणमेव म्लानिमुपगतं धर्मं पुनर्नवीकुर्यात् । शाक्तधर्मोज्जीवनसमुद्य-तानां नराणां न किमावश्यकं पुनरुज्जीवनं विधेर्नरबलिदानस्य ? ।

रुद्रभटसंप्रयुक्तोऽयं युक्तिवादो न सम्यक् प्रीणयति सभ्यानिति वीक्ष्य परिहृतनरबलिदानवादोऽमात्यः स्वयं वक्तुमारेभे । स उवाच– " सभ्याः समाचरतु परिहरतु वा कोऽपि स्वेच्छया बलिदानम् । विघ्निते-ऽस्मिन् दण्ड्येत विघ्नकर्ता बलिदानसाधकेन । परमन्यैः प्रकारैर्नैकिं बौद्धगणेनानेकविधं बाधितोऽस्मदीयो वैदिको धर्मः ? । कवलितसकल-दानद्रविणेनानेन बौद्धधर्मेण न किं संप्रति सौरशैवगाणपत्यादयो देवता निर्धनतां प्रापिताः ? । के लभन्ते राजप्रतिग्रहमधुना–बौद्धा वैदिका वा ? ।

धनलाभकथामेतामाकर्ण्य समुद्भूतलोभाः सर्वेऽपि वैदिकाः समभूचुः–"सत्यमेतदमात्यराज । अन्यैरपह्रियमाणोऽस्मदीयो ग्रासः कथमस्माभिः सह्येत?" ।

**अमात्यः**–परं यदि सर्वे यूयमैकमत्येन बद्धपरिकरा दर्शितनिजविरोधाः स्थानान्तरगामिनमिमं धनसंचयं निरुध्य भूयः पूर्वपथं स्थापयिष्यथ तर्ह्येव यथापूर्वं सुखभाजो भविष्यथ। जीर्णतां गतान्यपि भवतां देवतानिकेतनानि न कोऽप्युद्धरति राजपुरुषः। किन्तु नवनवां सुषमां प्राप्यन्ते विहारा बौद्धानामिति न किमनुदिनं प्रत्यक्षं वः?।

**सर्वे**:–सत्यमेतत्। प्रत्यक्षमिदमनुदिनं नः।

**अमात्यः**–तिष्ठत्वेषा धर्मोच्छेदकथा। परं दृश्यते भवद्भिर्यन्नीतिबन्धनान्यपि सह धर्मेण समुन्मूल्यन्ते सर्वत्रेति?।

प्रत्युत्तरमजानन्तः सर्वेऽपि वैदिकाः सम्भ्राः संभ्रान्ता इति वीक्ष्य रुद्रभटोऽभ्येत्याबादीत् "अनतिदूर एव भैरवपुरस्य वर्तते सुमहान् विहारो बौद्धानाम्। सन्ति तत्र यावन्तो नरा भिक्षवस्तावन्त्यो नार्योऽपि। वनितैवैकाऽऽवहति प्रामुख्यपदं विहारे। तच्छिष्यतामुपगता भवन्ति यौवनवत्योऽनूढा अङ्गना एव बहवः। अप्युपदिष्टं कचित् संन्यासस्वीकरणं नारीणां वैदिकधर्मेऽस्मदीये?। एतावतां यूनां स्त्रीपुरुषाणामेकत्र वासः कियतीमनीतिमाचरिष्यतीति किं कथयितव्यं भवताम्?।

श्लाघ्यन्ते सर्वेऽपि प्रश्नाः श्रोतृभिरात्मीयाः संवर्तीति विज्ञाय रुद्रभटः प्राप्तकालं मन्यमानो बभाण—"अपि भात्येतदुचितं वो यत् सर्वेषा महत्यप्यनीतिर्भैरवपुराधिपतिना महाराजेनाश्रयदानेन स्वयं संवर्ध्यत इति?।

श्रुतमहाराजाभिधानोऽमात्यः सरभसमुत्थायोवाच—"शान्तम्। नास्यां परिषदि महाराजप्रतिकूलं किमपि प्रोच्यमानं मयाऽनुमन्येत।

अभिधानमपि महाराजस्य केनापि प्रोच्यमानं न स्यात् संमतं मे। राजद्रोहो भवेत् तथा करणे। कथममात्येन मया सोऽनुमन्तव्यः?। सर्वज्ञो महाराजः। सर्वज्ञा एव भवन्ति सर्वे राजानः। न कर्हिचित् कोऽपि प्रमाद्यति नृपः। तत् किमर्थं दूषयथ महाराजम्?। वैदिक-धर्माभिमानिभिः सर्वैः स्वधर्मविरोधका बौद्धा यदि निन्दिता भवद्भि-स्तन्नऽकोपि युष्मान् स्थापयेद् दोषपक्षे। यथेच्छं निन्दन्तु भवन्तः स्वधर्मप्रतिकूलान् बौद्धान्। अहमपि तथा करणे भवत्सहायतामेत्य भवदभीष्टसाधनाय यतेय। तत् संप्रेष्य महाराजाय शिष्टमंडलमेकं यदि भवन्तः सविनयमस्य पुरो वर्णयिष्यन्ति स्वपक्षं ततोऽहमपि महाराजादिष्टो भवत्पक्षानुकूलं स्तोकमभिधास्यामि। स्वतन्त्रो महाराजो धर्मानुसृतौ। परमहमद्याप्यमुक्तवैदिकधर्मः। सेवावृत्तिमपि स्वधर्मविनाशकान् निरुन्धन्तं मां न कोऽपि प्रतिबद्धुं शक्नुयात्। महाराजोऽपि सहिष्णुप्रकृतिः। यत् स्वातन्त्र्यं धर्मविषये स्वयमुपभुज्यते तदेवान्येष्वपि तेन सपरितोषं वितीर्यते"

अमात्याननिर्गतैरेभिर्वचोभिर्मुमुदिरे सर्वे वैदिकाः सभ्याः। सचिवोपदेशमनुसृत्य च विनिश्चितं सर्वैः शिष्टमण्डलसंप्रेषणं महाराजाय। परमेवमक्षोभमवसानं परिषदो न यथापेक्षं जनयेदुत्साहं वैदिकेष्विति मन्यमानो रुद्रभटः समुत्थाय स्वयं समारब्धचरमभाषणः प्रोच्चैर्या-वच्छक्यं विगर्हितबौद्धधर्मः स्मृत्युपस्थितैर्वचोभिर्वैदिकं धर्मं चिरं प्रशशंस। ततश्च वैदिकधर्मपथभेदैः कथमपकृता वैदिकधर्मानुयायिनस्तत् स्फुटीकृत्य भूयः प्राप्तनरबलिदानाधिकाराः कथमुपकुर्युर्वैदिकास्तद् विशदीकृतवान्। अन्ततश्च बौद्धधर्मोच्छेदाय भाव्यं सर्वैर्बद्धपरिकरैर्वैदिकैरिति संप्रार्थ्य "स्वयमागमनेनोपकृता वयमतितराममात्यराजेन" इति सकृतज्ञता-भिनयमाभाष्याघोषितम् "अवसितं परिषत्कार्यं अद्यतनम्" इति।

'अवसितं सभाकार्यम्' इत्याकर्ण्य लंबोदर उवाच—जयति गणराजः। शैवा जगर्जुः—जयति शंकरः, जयति शंकरः। सौरगुरु-

रुज्जगार–विजयेतरां सविता सूर्यनारायणः। अथ शैवा मुखेनोच्चैर्ढक्कानादं चक्रुः । तेन च भूयः समुत्पन्नस्वपथाभिमाना अहमहमिकया चिरं स्वदेवताविजयशब्दं ते घोषयामासुः । तद् दृष्ट्वाऽमात्यः स्वकरमूर्ध्वीकृत्य सर्वानुद्दिश्य बभाषे–“ अपि भो वैदिकबांधवाः, भिन्ना अपि धर्मपथदेवता अस्मदीया न किं वेदान्तर्गता निखिलाः ? । तद्ब्रूतैकमत्येन ‘ विजयते वैदिकधर्मः ’ इति । अथ स्वाविचाराचारलज्जितास्ते सर्वे ‘ विजयते वैदिकधर्मः ’ इति भाषमाणाः सभागृहं तत्यजुः ।

## --सप्तदशः परिच्छेदः --

### ( राजसभावृत्तान्तः )

**शाक्तो वाऽन्यो नृशंसः प्रभवति न यथा बाधितुं बालमेतं**
**पूर्णाः सर्वा भवेयुर्झटिति च विविधा अस्य काङ्क्षा यथैवम् ॥**
**न्यासं मत्वा मदीयं कतिपयदिवसान् पालयेर्दक्षचेता**
**अन्विष्याहं प्रकुर्यां, सचिव, करयुगेऽस्यैव तातस्य यावत् ॥१॥**

ऊर्ध्वं सभासंमेलनात् राजान्तिकं जिगमिषू रुद्रभटः सह कतिपयैरनुयायिभिरेकतो गूढं संमन्त्रयमाणोऽतिष्ठत् ।

**रुद्रभट उवाच**—सभायाममात्यमुखविनिर्गतं राजद्रोहसंबद्धमालापनाकर्ण्य तु सुतरां साध्वसाक्रान्तहृदयोऽहमभूवम् । स्वयं बौद्धधर्मपक्षपातिनि महाराजे तत्संबन्धिनं प्रजाकोपमदर्शयन्तो वयं कथं पारयेम सोत्साहान् विधातुमस्मदीयाननुयायिनः ? । राजद्रोहमधिकृत्यामात्यकृतां सूचनामाकर्ण्य पुनर्महासभावसाने चिरमहं साशङ्क एवासम् ।

एतदाकर्ण्य प्रकट्तिाट्टहासः सचिवोऽवादीत्—' यद्येवं तन्मन्ये फलितं मे समुद्देशेन ' इति ।

**रुद्रभटः**—कथमिव ? तत् किं सभावैफल्यकामोऽभूदमात्यः ?

**अमात्यः**—सत्यं नासीन्मे तथा संकल्पः । परं यावदहं साचिव्यकामस्तावत् कथमहं राजापथ्यकारिभिः सह स्फुटमेवैककार्यो भवेयम् ? ।

**रुद्रभटः**—( सहासम् ) तद् नासंमतमन्यकृतं राजापथ्य-ममात्यस्य ? ।

**अमात्यः**—अन्यकृते राज्ञापथ्ये कः प्रतिकारो मदधीनः ? । किमर्थ-महमेष्यामि परिपन्थितां तेषां ये स्वपीडापरिजिहीर्षयैव भवन्ति समुद्यता अनुष्ठातुमपथ्यं राज्ञः ? । न निष्कारणं राजापथ्यचिकीर्षा करोति पदं जनानां हृदयेष्विति जानन्नहं किमर्थमुपदेक्ष्यामि जनान् ' मैवमाचरत ' इति ?। मन्त्रिपदाधिष्ठितत्वाद् भृत्योऽहं महाराजस्य । यावत् साचिव्य-सस्पृहं मे मनस्तावन्नृप एव मयाऽनुवर्तनीयः । यथा स्वतन्त्रा प्रजाऽ-धिकारिणी निषेद्धुमनभीष्टमाचारं नरपतेस्तथा नाहं परतन्त्रः । नावश्यकं प्रजानां स्वतन्त्रतयाऽनुवर्तनमनभीष्टस्य राज्ञः । अन्योन्यावलम्बित्वाद् राजप्रजाधर्मयो राजधर्मशैथिल्यं न चिराच्छिथिलयति हृद्गतां राजभक्तिं प्रजानाम् । अतो न कोऽपि दूषयेत् सचेता राज्ञः प्रतिकूलतां गताः प्रजा एतादृशीः ।

**रुद्रभटः**—ज्ञातं मया राजप्रजाधर्मयोस्तत्वं सामान्यम् । परमस्म-त्प्रार्थनापराङ्मुखे महीभुजि किमस्माभिः प्रतिविधातव्यं तद् विशदी-कृत्यास्माननुग्रहीतुमर्हत्यमात्यः ।

भूयो विहस्योवाचामात्यः—कथितपूर्वेण वचसैव मे स्फुटीकृतं भवदभीष्टमुत्तरमित्यासीन्मे तर्कः । भूयः श्रूयतां सावधानम्-राजसभां संप्राप्तेषु भवत्सु युष्मदनुकूलं शब्दमात्रमपि प्रकाशं प्रकटयितुमहं न स्यां समर्थः । महाराजपरिपृष्टोऽहं भवत्प्रतिकूलमेवाभिभाषयाभिप्रायम् । शाक्तप्रतिकूलं हि संप्रति स्फुटमेव बौद्धपक्षपाति मनो महाराजस्य । परं प्रतिकूलभाषिण्यपि मयि भवद्भिर्निर्भीकैरेव रोषपरुषाक्षरैर्दूषणीयो महाराजः । सौम्यप्रकृतितया परुषाक्षरानपि वो न कोपिष्यति सः । परमनुपयुक्तपरुषाक्षरेष्वेव निवृत्तेषु भवत्सु नैष व्यतिकरोऽभीष्टमासा-दयेद् रूपं न च भवदनुयायिनः शाक्ता यथेप्सितं प्रकोपसमुत्सुका भवेयुः ।

**रुद्रभटः**–स्फुटीभूतमेतदधुना नः । परमपरागपरेषु शाक्तेषु सचिवपदवर्तिनममात्यमेव योजयिष्यति प्रकोपकारिणां समुन्मूलनकर्मणि महाराजः । अमात्यश्चास्मान् दण्डयितुं प्रेषयिष्यति सैनिकान् शस्त्रपाणीन् । अथ यथादेशं युद्धपरेषु सैनिकेषु कथमात्माऽस्माभी रक्षणीयः ? । कथममात्यः प्रभवेत् सभागार इव समरेऽपि यथार्थेऽर्थमस्मदीयं संपादयितुम् ? ।

**अमात्यः**–अलमत्रविषये चिन्तया । विश्वासवातसमुद्यते स्वयं सेनापतौ किमिति बिभ्यति भवन्तः सैनिकेभ्यः ? । न स्थास्यति स्वयमाहवे महाराजो वीक्षितुं कृतकमकृतकं वा चेष्टितं मामकीनम् । अतो राजसभाया अपि समरभुवि सुकरतरं वः साहाय्यकरणं मे । परमेवं साहाय्यदानसमुत्सुकेऽपि मयि न भाव्यं मनागपि भवद्भिराहवोपकरणे शिथिलादरैः । यतो न मादृशः सर्वोऽपि राजाश्रितः सेनानीगणः शाक्तभक्तः । केषांचित् तु हृदये निरतिशया राजभक्तिः । अतोऽनुकूलेऽपि मयि सहान्यैर्योद्धुं भाव्यमेव क्षमैर्भवद्भिः । तथा बौद्धधर्मविमोहितमनाः संप्रति महाराजो यथा प्रजाप्रकोपसंत्रस्तः स कदाचित् परित्यज्य राज्यं बौद्धभिक्षुदीक्षां स्वीकरिष्यति । पर तथा भविष्यतीति विश्वस्य शिथिलितप्रजाप्रकोपसमुद्यमैर्नैव स्थेयं भवद्भिः ।

अमात्यमुखविनिर्गतान्याकर्ण्यैतानि वाक्यानि सुतरां तुष्टचेता रुद्रभटोऽग्निवर्णमनुयायिनश्चान्यान् अभिवीक्ष्योवाच—

"प्रेक्षन्तां प्रेक्षन्तां भवन्तः सर्वेऽपि संप्रति केन्द्रस्थानवर्तिनो नो ग्रहाः शाक्तानाम् । सत्यमुज्जीवेत् पुनः शाक्तधर्मः । अपि-चाग्निवर्ण, भवत्सुतसंप्राप्तिदिनमेष्यति प्रारंभमुहूर्ततामेतस्योज्जीवनस्य" इति ।

"एवंरूपमेव प्रेम परमार्थं सुहृदः" कृतज्ञतामभिनयन्नग्निवर्णो बद्धाञ्जलिः प्रणम्य प्रोवाच ।

आवश्यकमत्र स्फुटीकरणं स्वरूपस्यान्येषामनुयायिनां रुद्रभटस्य । एतेषु प्रायः सर्व एवाद्य यावदविदितरुद्रभटाभिप्राया अवर्तन्त । अतो निर्बन्धादेव रुद्रभटस्यासन्नेतेऽनिच्छन्त एव संप्राप्ताः परिषदं वैदकीम् । बलीवर्द इव पुच्छपीडनाद् यद्यपि बलादेवाभूद् क्षणिकजागृतिमुपनीतो वैदिकधर्माभिमान एतेषां तथापि परप्रत्ययनेयधीभिरेभिर्वैदिकधर्माभिमान-विडम्बिभिरेवाभावि । अतो न कोऽप्येतेषु परिषदि शाक्त-धर्मानुकूलमुदगिरच्छब्दमात्रम् । " अपि वैदिकधर्मानुयायिनो यूयं ? " इत्यनुयुक्तेऽमात्येन विविधपटपरिवेष्टिताङ्गैः प्रकटितघण्टारवैर्नन्दिकैरिव क्रीडासु चिरप्रकम्पितशिरोभिरेभिरस्थीयत । परिषदि पुनः स्वस्वोपास्य-देवतार्चनवैशिष्ट्यमधिकृत्य केवलं सहान्यैरयथातथं मुहुः कलहं चक्रुः ।

स्वस्वगृहेष्वात्मनोऽभीष्टदेवतार्चनमेव मोक्षायेति मन्यमानास्ते कथं शाक्तधर्मपक्षपातिनो राजद्रोहसमुत्सुका वा भवेयुः ? । परमात्मस्फूर्ति-विकलेषु द्रागत्र पदं करोत्यनुयायितागुणो दृढीयान् । आस्वादिताहि-फेनसंप्राप्ततन्द्रो यथा मानवोऽन्यमाभाषणपरं हुंकारेणैव केवलं दर्शयति संमतिमात्मीयां तथैवैतेऽपि धर्मकार्याय रुद्रभटः काङ्क्षते किमपि साहाय्यं तच्च करणं कर्तव्यं स्वीयमिति मन्यमानास्ते यद् यद् रुद्रभटोऽदर्शयत् तत्तत् सर्वमात्मनः संमतमिति शिरःकम्पेन दर्शयामासुः । अत एव ते रुद्रभटोपदेशात् परिषदं प्राप्ताः, शिष्टमण्डलं प्रविष्टाः, राजदर्शनायापि प्रकृत्यैव समुद्यता जाताः । परं राजद्रोहे प्रजाक्षोभे वा समारभ्यमाणे किमा-त्मनोऽनुयायिनः कुर्युरिति नासीन्न विदितं रुद्रभटस्य । तथापि प्रकृति-प्रियत्वाद् व्यापाराणां तथाविधानां, यथा वनं दिधक्षन् मानवो वह्निपाणि-रुभाभ्यामपि हस्ताभ्यामुभयपार्श्ववर्तिनो विभागान् दहन् यावत् दहेत् तावत्तैव तुष्यति तथाऽसावपि सर्वेषु विद्रूपं जनयन् यावल्लब्धेनानुकूल्येन तोषमयात् ।

यथा तथा भवतु। नैतदावश्यकं कथनं यत् उपांशुसंवृत्तेनानेन रुद्रभटामात्यमन्त्रेण, स्वकार्यमधिकृत्य द्विगुणीभूतसमुत्साहो जज्ञे रुद्रभटः।

*　　　*　　　*

अनुदितपूर्वेणाद्योदितं दिनेन भैरवपुरे। नैवंविधः कर्हिचित् समपद्यत प्राक् व्यतिकरोऽत्र नगरे। अद्य हि राजाचारमधिकृत्य मनोव्यथामात्मीयां राज्ञ एव पुरो विशदयितुं सज्जीभूतं शिष्टमण्डलम्। राजदर्शनविनिश्चितां घटिकां प्रतिपालयन्तः सर्वेऽपि नागराः प्रातरारभ्य राजसभाप्रेक्षणसमुत्सुकमानसाश्चेरुः। नैतेषु कोऽपि ज्ञातवान् किं याचिष्यते राजानं मण्डलं शिष्टानाम्। परं बहवः स्वकपोलकल्पितैः समुत्तेजनपरैर्वाक्यैः किमपि सावेशं भाषमाणा अन्यान् राजसभाविलोकनसमुत्सुकान् विदधुः। तेऽपि च पुनस्तताननुचक्रुः। एवं सर्वेऽपि नागरा मिलिताः संघशः समुज्झितस्वनिवासाः प्रासादपथसंमुखा भ्रेमुः। विदितसौम्यप्रकृतितया महाराजस्य गभीरेऽप्यस्मिन्नवसरे निर्भीकान्येवावर्तन्त सर्वेषां समागतानां मानसानि नागराणाम्। न मनागपि शाक्तधर्मप्रीतिपूरितान्यासन् मानसानि नराणां संप्राप्तानाम्। केचित् तु बौद्धधर्मानुरागिण एवाभूवन् कात्स्न्र्येन। परं सावेशमारभ्यमाणेषु व्यापारेष्वेवंविधेषु प्रकृत्यैव कुतुकिनो जनाः सिद्धिमसिद्धिमुद्दिश्य तेषां सविवादं मतान्यात्मनो दर्शयन्तोऽतितरां सर्वदा विनोदमनुभवन्ति। नासन् भैरवपुरवासिनो जनाः सादरा रुद्रभटे। किन्तु सनिश्चयं दृढनिषेधवाक्यानि प्रयुञ्जानो जनश्चेष्टापटुः प्रायो विस्मारितनिजचारित्रदोषोऽन्यान् निजविक्रमसमाकृष्टमानसान् विधातुं प्रभवति। तेन चान्यदा रुद्रभटनिन्दानिपुणा अपि नरा अद्य तेन शाक्तधर्मोद्धृतिसमाचरितान् प्रयत्नानेतावतः फलोन्मुखानीक्षमाणा विस्मृततच्चारित्र्यदोषाः " असंशय-

मसा उपकरिष्यति बहुंशेन शाक्तधर्मं न चिराद् विक्रमेणात्मनः ” इत्यहमहमिकया तत्प्रशंसापरा बभूवुः ।

*　　*　　*

जयशब्दपरेषु बन्दिषु सभागृहमागत्य सिंहासनमारुरोह महाराज इति वीक्ष्यैव सर्वेषां विस्मितान्यभूवन् मानसानि । अदृष्टपूर्वेण हि वेषेण परीतमूर्तिरासीदद्य सः । न व्यलसदेकमपि सभोचितं राजचिह्नं शरीर एतस्य । सौवर्णतन्तुवसनस्थाने कन्थासदृशं कार्पासवसनमेव केवलमलक्ष्यतास्याच्छादकं देहस्य । न मस्तके मुकुटो न वोष्णीषं सार्वकालिकम् । यतिरिवानुष्णीषशिरा एवासीदद्य स सभागृहं संप्रविष्टः । रौप्यसुवर्णदण्डपाणयो महार्हवाससो जयघोषमुखराः कञ्चुकिनोऽप्यद्यतनं महाराजमीक्षमाणा मनागिवात्मनो मनसि स्वीयेन वेषेण लज्जिता इवालक्ष्यन्त । बौद्धभिक्षुदीक्षां स्वीकर्तुमीहते महाराज इति प्रागेव प्रकटीभूता वार्ताऽद्यतनेन महाराजव्यवहरणेन सत्यतामुपगतेत्यमन्यन्त बहवः ।

न महाराजोऽद्य यावद् कमपि स्फुटं कथितवान् बौद्धभिक्षुदीक्षास्वीकरणस्पृहामात्मीयाम् । परं संप्रति महाराजेनान्तरान्तरा बौद्धविहारवितीर्णानि महान्त्युपायनानि बौद्धधर्मप्रसारस्वातन्त्र्यं चानुभूयमानं भिक्षुभिरालोक्यालोक्य जनैरेवासीदनुमिता बौद्धधर्मस्पृहा महाराजस्य । अन्यदप्यवर्तत जनानामनुमानहेतुतामुपगतं निदानम् । शाखिशाखावलम्बिनी समुज्झितपूर्वकोटिरान्दोलिकाऽसंशयमासादयेत् परां कोटिमिति यथा प्राकृतेनाप्यनुमीयते विनाऽऽयासं जनेन तथैव मानुषस्वभावविज्ञानिभिरज्ञायत नागरैराचारपरिवर्तनाद् राज्ञः । यौवने हि महाराजो दुराचारनिरतः सुतरां क्रूरचेताः पितरं घातयित्वा प्राप्तवान् राज्यपदमात्मीयम् । समासादितराज्योऽपि पूर्वं कंचित् कालं क्षुद्रस्याप्यपराधस्य कृते कामं व्ययोजयत् ,क्रूरतया,प्राणेभ्यो जनानमितान् । मृगयायै काननं गतश्च तथा जघान पशुपक्षिणो यथा रुधिरपूरपरिषिक्तमभादखिलं काननं सर्वतः ।

परमेवं क्रूरचेतसो महाराजस्य हृदये स्वयमेव समुत्पन्नो विद्वेष उपरि दुराचाराणामात्मनः। गच्छता कालेन तु तथाऽवर्धत स विद्वेषो यथा निरंतरं ध्याननिरतः समुद्विग्नमनाः संभ्रान्त इवादृश्यत। अथ परित्यज्य शस्त्रं समारब्धदानधर्मादिविधिनाऽनेन निर्मितान्यनाथनिवासहेतोर्मन्दिराण्यनेकानि। स्थापितानि स्थाने स्थानेऽन्नसत्राणि बहूनि। संप्रेष्य रुग्णगृहाणि राजवैद्यान् धीमतो यथा गदिनो विना त्रासं लब्धोपचारा अगदा भवेयुस्तथा यतितवान्। प्रासादस्थापिताया देव्याः पुरो दिने दिने समाचर्यमाणा प्रतिषिद्धा पद्धतिः पशुबलेः। अविरतं धर्मचिन्तनरत एव कालमतिवाहयन् पुराणपापप्रशमहेतोर्देहदण्डनधिया प्रारभतोपवासादिविधीन् दुष्करान्। दूरीकृत्य मुखमस्तकवर्तिनं कचकलापमखिलमस्पृष्टभूषणमपुष्यच्छरीरमात्मनः।

अस्मिन्नेवावसरेऽवलोकिताख्ययाऽङ्गनया पुरस्कृतो बौद्धधर्मप्रसारकार्याय पर्यटन् भिक्षुगणो भैरवपुरमवाप। मनसा प्रतिपन्नयतिव्रतस्य महाराजस्य परिवर्तितं मतं स्थिरीकर्तुमेतन्निदानतां यातम्। 'दया, शान्तिः, अहिंसा' एव मूलं धर्मस्य यथार्थस्येति स्फुटमुपदिशत आकर्ण्य तान् बौद्धभिक्षून् समानतया धर्मविचाराणां बौद्धकृतैः कर्मभिस्तुष्टमना अजायत महाराज इति नात्र किमपि विस्मयावहं ज्ञानिनाम्।

* * *

अनतिक्रान्तवेलमुपायाद् रुद्रभटो राजसभां सहात्मनोऽन्यैरनुयायिभिः।

"अदर्शितस्वपरपक्षाधिक्यन्यूनै रुद्रभटं नायकं परिकल्प्य 'यद्यत् स वदेत् तत् तत् साकल्येन नः संमतं' इत्यभिनयद्भिरेव भाव्यं भवद्भिः पुरो राज्ञः,न तत्र मनागप्याविष्करणीया अन्योन्यगताः पक्षभेदाः" इत्यादिभिरमात्योपदेशवाग्भिः प्रागेव दत्तसंकेततया न कोऽपि शिष्टमण्डले वैदिकपरिषदीवात्र किं मान्यं किं वा मान्यतरं स्थानं केन-

कथं स्वीकरणीयमित्यधिकृत्य कलहपरो बभूव। सर्वेऽपि राजपुरुषदर्शितं यथालब्धमासनं संतुष्टेन मनसा स्वीचक्रुः।

सौजन्यसमुद्भासमानां मुद्रामावहता नरपतिना स्वाशयनिवेदनाय सूचितो रुद्रभटोऽवादीत्—" सुतरां खेदकरोऽद्यतनोऽयमुपन्यासः। आसन्नावसान इवालक्ष्यतेऽनादिरस्मदीयः पितृपितामहिकः शाक्तधर्मः। तन्नाशनिदानतामुपगतोऽवैदिकश्चान्यधर्मो न केवलं रक्षणं परमातिथ्यलक्षणं भक्षणमपि स्वाभीष्टमखिलमविरतमवाप्नोति। ' सद्धर्मप्रतिपालकः ' इति धारयति पदवीं महाराजः। सद्धर्मो नाम पूर्वपरंपरया शक्तिधर्म एव ज्ञातव्यः। परं प्राक् शाक्तक्षेत्रवाहिनो महाराजराज्यवर्तिनो दानधर्मस्वरूपाः सर्वेऽपि निर्झराः शुष्कतामेत्य संप्रति बौद्धक्षेत्रेषु प्रकटिताः सावेगमावहन्ति। केवलं न्यायार्थिभिरस्माभिरेतत् प्रार्थ्यते यत् शाक्तधर्मोज्जीवनकामा वयं महाराजेन साहाय्यदानेनानुग्रहीतव्याः, अवैदिकबौद्धधर्मातिक्रमणात् च रक्षणीयाः। अचिरसंगतायां समस्तवैदिकसभायां सर्वसंमतामिमामेव प्रार्थनां निवेदयितुं महाराजाय सह परिपन्नियुक्तैः प्रतिनिधिभिरद्याहमत्र संप्राप्तः " इति।

अवसितवचने रुद्रभटे महाराजः शान्तचेतास्तत्प्रार्थनामधिकृत्य गभीरमुदगिरत्—" मामभ्येत्य प्रजापीडां श्रुतौ मे पातयद्भिः सत्यमहं भवद्भिरतितरामुपकृतोऽस्मि। शाक्तधर्मग्लानिविषये पुनः कोऽन्यः प्रष्टव्यः शाक्तगणात्?। धर्मतत्त्वं हि न कर्हिचिद् विनश्यति न वा मलिनतामुपयाति "।

**रुद्रभटः**—सत्यमाह महाराजः। मलिनतामुपगततयाऽऽचारस्यास्मदीयस्य प्रणाशोन्मुखः संप्रति शाक्तधर्मः। अत एव पुनरुज्जीवयितुमाचारान्नो वयं सयत्नाः। न यथापूर्वमाप्नोति राजाश्रयमयमिदानीमाचारः। न तत्कृते महाराजमभियोक्तुं वयमद्य संप्राप्ताः किन्तु भाव्यं वितीर्णाश्रयेणातः परमिति महाराजचरणयोः केवलं प्रार्थयितुमेव।

**महाराजः**—कानाचारान् भूय उज्जीवयितुं यूयं सयत्नाः ?।

रुद्रभटो बद्धाञ्जलिरवोचत्—"सुप्रथिता एवाचाराः शाक्तधर्मस्य"।

**महाराजः**—परं मतद्वयानुयायिनः शाक्तान् शृणुमः। तत्रैके दक्षिणमार्गा अन्ये च वाममार्गाः। न समानानाचरन्त्याचारानुभौ। अतः पृच्छ्यते कानाचारान् पुनरुज्जीवयितुं यूयं समुद्यता इति। किं दक्षिणमार्गपक्षपातिनो यूयं वाममार्गानुरागिणो वा ?।

ऋजुमनसैव महाराजेन परिपृष्टं प्रश्नमेनं मार्मिकमाकर्ण्य मनाक् संभ्रान्तमना अपि रुद्रभटो द्राग् व्यवस्थापितवृत्तिरवादीत्—"सत्यं वाम-दक्षिणमार्गभिन्ना आचाराः शाक्तानाम्। तथापि तेषु ये येषामभिमता ग्राह्या वा ते तैः स्वेच्छयानुसरणीयाः। न केवलं वाममार्गाणामेव शाक्ता-नामाचारदुश्चरतां निवेदयितुमागतोऽहम्। सन्ति सह मया शिष्टमंडल-संप्रविष्टा दक्षिणमार्गाः शाक्ता अशाक्ता अपि च वैदिकधर्मानुयायिनो बहवः प्रतिनिधयः।

**महाराजः**—तद् अनुसरन्तु भवन्तः स्वान् स्वानाचारानभीष्टान्। को वः प्रतिबध्नाति ?।

**रुद्रभटः**—न कोऽपि प्रत्यक्षतयाऽद्यापि प्रतिबध्नाति नः। परं लब्धराजाश्रयं वीक्ष्य तमवैदिकं धर्ममत्रत्याः प्रजा अपि वैदिक धर्मपराङ्मुखा एव।

**महाराजः**—यदि प्रजाभिरनुभवनीयं स्वातन्त्र्यं धर्मविषये तत् किमर्थमसेव्यं तद् राज्ञः ?।

**रुद्रभटः**—प्रजा इव न स्वतन्त्रो राजा। राजा नाम प्रजानां प्रतिनिधिः। वैदिकधर्मानुयायिन्यश्चात्रत्याः प्रजा अखिलाः।

**महाराजः**—मनागतिव्याप्तिदूषितं भाति भाषितमत्रभवतः। सन्ति मे राज्ये वैदिकधर्मानुयायिनो भवादृशा आर्या इव पुरातनधर्म-

सेवितोऽनार्या अपि प्रभूताः । तथैव दूरीकृतवैदिकधर्मदोषा नूतनधर्मस्थापका अधुनातना बौद्धा अपि मे प्रजाभूता एव । अत एकस्मिन्नेव मयाऽनुगृहीते धर्मे न किं स्याद् दूषितो मया राजधर्मः ? । शुभाशुभप्रकृतीनि सर्वाण्यप्यपत्यानि मातुः समेनैव प्रेम्णा द्रष्टव्यानि । अतः सर्वधर्मस्वीकरणं ममावश्य कमेव । राजाश्रयरूपेण सन्ति पुरा शाक्तैराप्तान्यग्रहारादीनि महान्ति परितोषिकाण्यनेकानि । अल्पान्येव भवन्ति मया वितीर्यमाणानि दानानि बौद्धेषु । यथा तान् विपरीताचारान वैदिकान् मन्यन्ते भवन्तस्तथैव तेऽपि भवताम् । अतोऽदूषितपराचारैः सर्वैरपि स्वाभीष्टः समाचारणीय आचारः । न कस्यापि भाव्यं परिपन्थिना महीपतिनेत्येतावदेव कर्तव्यं राज्ञः ।

एवं ब्रुवाणमेव नरपतिमभ्युपेत्य द्वाःस्थो जगाद—'स्त्रीपुरुषमिश्रितो बहिः संप्राप्तो बौद्धभिक्षुगणो महाराजं द्रष्टुमिच्छति' इति । 'प्रवेश्यताम्' इति प्रोक्ते महाराजेनाज्ञसैवावलोकिता—मृणालिनी—शमधनादयो बौद्धाः सह मुरारिणा बालेन राजसभां विविशुः । झटिति प्रत्युत्थाय महाराजेनाभिवादिताऽवलोकिता । अथ सहसैवाराजपीठमुपगतयाऽवलोकितया स्थापितो मुरारिश्चरणयोर्महाराजस्य । विलोक्यैनं व्यतिकरं विस्मयविकसिताक्षाः सर्वेऽपि सभ्याः "कोऽयं बालः, किमर्थंच स्थापितश्चरणपुटे महाराजस्य" इति चिरं चिन्तयन्तोऽपि न किञ्चिदज्ञासिषुः ।

न पुनरज्ञाततत्त्वेनास्थायि चिरं रुद्रभटेन । अचिरादेव विदितार्थः संजातमन्युः स रुधिरबिन्दुपाटलया दृशाऽवलोकितां मुरारिं च मुहुरीक्षमाणः समीपगतान् शाक्तानुद्दिश्य स्वैरमुज्जगार—"पश्यत पश्यत कथमेनं बालहतकमपहृत्य विघ्नितो बलिदानविधिरस्माकं नृशंसैरेभिः" इति । एवमनेन विशदीकृतेऽपि न किञ्चिदबुध्यतान्यैर्जनैः सामान्यैः ।

महाराजोऽपि स्वयमजानन्नप्राक्षीत्–‘ भगवत्यवलोकिते, कोऽयं शिशुः ? । न पाल्यन्ते प्रायेण शिशवो युष्माभिर्विहारमठेष्वात्मनः । अपि च मच्चरणस्थापनेऽस्य को हेतुर्वः ?’ इति ।

कृताञ्जलिरवलोकिताऽनुपविष्टैवावादीत्–“सत्यं नास्माभिः परिपाल्यन्ते बालका विहारमठेष्वस्माकम् । परं सदयं जीवरक्षणार्थमशरणः कदाचित् केनचिदर्पितो बालकोऽपि परिरक्ष्यत एवास्माभिरात्मीयत्वेन ’ इति ।

**महाराजः**–युज्यते । परिरक्षन्त्वेनं विहार आत्मनः । परं प्राणरक्षणार्थमिति किमुच्यते ? । कस्माद् भीतिः प्राणानामेतस्य ? ।

**अवलोकिता**–शाक्तगणात्, आसुरात् तेषां धर्माचारात् । प्राग्वासरेभ्यः कतिपयेभ्यः जननयनेभ्य आत्मानं रक्षन्ती काचिदङ्गना प्रविश्य विहारमस्मदीयमेनंकुमारमस्माकं पुरो निक्षिप्याभाषत–“ देव्या-अग्रे बलीकर्तुमेनमुद्यताः शाक्ताः । यदि भवद्भिरयं रक्षिष्येत तर्ह्येवानेन जीविष्येत ” इति । परं यस्मात् सा वराकी न क्षमा रक्षितुमेनं तस्मादेव हेतोर्वयमपि । अहिंसाव्रताः शांतिप्रिया हि वयमशस्त्रा भिक्षवः । तद् बालमेनं भूयः स्वाधीनतां नेतुं विहारमभिपतत्सूद्यतशस्त्रेषु शाक्तेषु कथमस्माभिरयं रक्षणीयः । अतो जीवदयामस्मदीयां सफलीकर्तुं राजाश्रय एवावश्यकोऽत्र विषय इति मन्वाना वयं महाराजचरणं शरणमुपागताः स्मः । सहामुना बालजीवेनास्मानभयप्रदानेनाधुनानुग्रहीतुमर्हति महाराजः ।

आकर्ण्यैवैतदुद्बाष्पनयना बभूवुरखिलाः समागताः सभ्याः । शिष्टमण्डलवर्तिनामपि प्रतिनिधीनां कतिपयानां वदनानि विवर्णतां भेजुः ।

महाराज उवाच–“ प्रदत्तं मयाऽभयमभ्यर्थितं भवद्भिः । स्वीकुरुत बालकमात्मनः । बालेनैवंविधेन बलिकर्म कारयन् धर्मोऽधर्म एव ।

दयामेव हि वदन्ति मूलं धर्माणां सर्वेषाम् । अधुनैव शिष्टमण्डलप्रधानभूतैरेतैः शाक्तगुरुभिरावेदितमनन्यविघ्नितेन भाव्यं शाक्तधर्माचारेणेति । मयापि प्रत्यभाणि–सर्वैः स्वातन्त्र्येणाचरणीयाः स्वीया आचारा धार्मिका इति । तत् किमेते चिकीर्षन्ति नरबलेराचारं विना विघ्नम्?" इति ।

परं धृष्टेनेवागणिततिरस्कारेणाभावि हृदयेन रुद्रभटस्य । स उवाच–विशदयाम्याशयं मदीयमिति क्षाम्यतु महाराजः । दत्ते सकृदाचारस्वातन्त्र्ये क आचारः, कीदृश आचार इति प्रश्न एव निष्प्रयोजनः । यः कोऽपि धर्माचारमाचरन् धर्मनिष्ठः स्वधर्मविहितमेव कर्मबुद्ध्या समाचरति स एव भवेद् भोक्ता तज्जनितस्य पापस्य पुण्यस्य वा । न कोऽप्यर्हति शुभानशुभान् वा प्रतिपादयितुमाचारानन्नादीन् । अवाप्तपराचारचिकित्सास्वातन्त्र्येषु सर्वेषु कियदवशिष्टमाचारस्वातन्त्र्यं जनानाम । शाक्तप्रजापतिर्महाराजः । रक्षणीया एव तेन स्वप्रजानामाचाराः । दयाकञ्चुकप्रवेशिनोऽपि स्फुटमवैदिकाचारनिरता एते नैव मनागप्यर्हन्त्यर्हणाम् । अपि चाहिंसा यथैकेषां धर्माचारस्तथैव....

महाराजो मध्य एवावादीत्

—किं हिंसाऽप्यन्येषां धर्माचार इत्येव विवक्षति भवान्—? ।

**रुद्रभटः**–नाहं स्वीकरोम्यमुं हिंसाशब्दमिति मां क्षन्तुमर्हति महाराजः । परमेतदपि मयोच्यते यद् धर्मविहिते बलिदाने हिंसाशब्दोऽप्रयोज्य एव ।

महाराजः सनिश्चयमवादीत्–"मैवम् । शब्दच्छलोऽयं केवलः । न मे प्रयोजनमनेन शब्दच्छलेन । धिङ्मां यद्यहं मच्चरणसमर्पितममुं सुकुमारं बालकं वधाय समर्पयेयम्" इति ।

**रुद्रभटः**–प्राक् सभाप्रवेशान्नो धर्मशत्रूणामेतेषां न किमासीदुक्तं महाराजेन यत् सर्वैः स्वातन्त्र्येण स्वाचारा आचरणीया न केनापि ते वारणीया इति? ।

**महाराजः**—"आम् । उक्तमेव मया तत् । परं न तत्कृते बालेऽस्मिन् वितीर्णमभयवचो मया भङ्क्तव्यम्" इति । एवमाभाष्य मन्त्रिमुखवलितवदनो महाराजोऽप्राक्षीत्—कथमत्र विषये मन्यते मन्त्रि-वरः ? इति ।

वदनविवरस्थापितपटेनामात्येनाभाणि—"महाराजस्यैव वचनं यथार्थमत्र । अपि च स्वधर्माभिमानपूरितचेतसोऽप्येते शिष्टमण्डलधुरीणा नार्हन्त्येवमुत्तरोत्तरेण कलहायितुं सह स्वयं महाराजेन । राजद्रोहमेवा-मुमहं गणयेयम् । न केनापि विचारणीय आचार इति कथमिवावहे-दौचित्यम् । यदि स्वातन्त्र्याधिकार आचारे महाराजादेव प्रापणीयोऽन्यैस्तत् अधिकारदाने धर्माचारस्य साधुताया असाधुताया वा विचारणे महाराजोऽधिकृत एव" अमात्यवचनमाकर्ण्य प्रीतमना महाराजोऽभाणीत्—"अक्षमा भगवत्यवलोकिता स्वविहारमठे बालमेनं परिरक्षितुमिति संप्रत्य-मात्यस्यैव समीपे स्थापयामि । पश्चात् पितरावस्यान्विष्य तदधीनं करिष्यामि । शाक्तभिया स्वीकरणपराङ्मुखयोस्तयोरहं कथमपि स्वेच्छयाऽन्यथा व्यवस्थापयिष्यामि । तद् आ तीर्थयात्रानिवर्तनान्मे दिनद्वयं न्यासी-कृतमेनं कुमारं परिरक्षत्वमात्य इत्यादेशो मे" ।

अमात्यहस्ते निक्षिप्य मुरारिं समुज्झितासनोऽन्तर्गृहं प्रविवेश महाराजः । पर्यस्ता राजसभा । सह मृणालिन्या सानन्देन मनसा विहारं प्रति प्रस्थिता भगवत्यवलोकिता । विषण्णानना अन्योन्यमुखान्यवलोक-यांचक्रुरितरे शिष्टमण्डलगता धुरीणाः । समुपजातमन्युरिवालक्ष्यत तत्र केवलो रुद्रभटः । अमात्यहस्तविन्यस्ततया बालस्य मनाङ्मन्दीभूतकोपे-वाप्यभादाननाकृतिरेतस्य । अमात्यनयननिहितदृष्टिरसौ चिरमतिष्ठ-न्निश्चलः । अन्ततोऽमात्यं मुरारिं चेक्षमाणो वृश्चिकपुच्छानुकारिणीं श्मश्रु-राजिमात्मीयामुल्लासयन् स सभागृहात् सावेगं निरगात् ।

राजसभासंवृत्तं संप्रत्यन्यमेकं व्यतिकरं विवृणुमः–राजसभादिदृक्षया संगतेषु प्रेक्षकगणेषु सर्वजननयनगोचरीभूते स्थले तिष्ठन्त्यभूदङ्गनैका । अमात्यकरसमर्पिते मुरारौ महाराजेन तथा सुचिरं तया प्रकटितो हासो यथा विस्मिताः सर्वेऽपि प्रेक्षकास्तदानीं तन्मुखदत्तदृष्टयो बभूवुः । तूष्णीमुपविष्टेषु सर्वेष्वेकयैव विकृतं विहस्य संतिष्ठमानया तया सकलजनसुलभदर्शनयेवाभावि । परिहितानेकजीर्णचीवरा, श्वेतकुसुममञ्जरीविभूषितशिरोरुहा, करकलितासिधेनुका सा विचित्रैरात्मनो दृष्टिविक्षेपैः सभामखिलां महाराजं विशेषेणच रुद्रभटं मुहुर्निपुणमीक्षमाणा सहान्यैस्तूष्णीमेव पूर्वं सभ्यैरुच्यमानानि भाषणानि सावधानमाकर्णयन्त्यासीत् । परमन्ततो महाराजसमर्पितममात्यकरपरिगृहीतं च मुरारिमालोक्यैवानन्दवशीभूतया तया सहसैव प्रकटितविकटहासयाऽस्थायि । मौनपरेष्वितरेषु सभायामेक एव विचित्रं किमप्याचरन् आकृष्य परेषां मानसानि तान् समुत्पन्नवैधेयशङ्कान् विदधाति । विकृतवेषा चैषाऽङ्गना दृष्टमात्रैव विकृतमतिरित्यैकमत्येनाज्ञायि सर्वैः । झटित्येव राजपुरुषः कश्चित् सरभसं तामुपेत्य–“अपेहि द्रुतं स्थानादस्मात् । किमत्र प्रयोजनं भ्रान्तमत्या” इत्युच्चैर्निर्भर्त्स्य यावत्तां निष्कासयति तावदेव दत्तदृष्टिर्महाराजस्तं निषिध्य गभीरमुवाच–“मा तावत् । भ्रान्तमतिरपि प्रजाभूता सा मे । अपि च हास्यं नाम नातितरामक्षम्योऽपराधः । कदाचित् सहेतुकोऽपि स्यादस्या हासः । तदलं निषेधेन तस्याः” इति । राजमुखविनिर्गतामाकर्ण्य वाणीमेतां द्राङ् निववृते राजपुरुषः । परमनेन व्यतिकरेण सर्वेऽपि सभ्या अधिकतरमेव तन्मुखदत्तदृष्टयो बभूवुः । किन्त्वचिरादेवान्तर्गृहप्रविष्टतया महाराजस्य परिसमाप्तसभाव्यापाराः सर्वेऽपि सभ्या स्वं स्वं स्थानं जिगमिषवः समाकृष्य दृष्टिं तद्गतां स्वाभीष्टं पन्थानं भेजुः । तेन न केनापि सा भूयः पीडिताऽभूत् ।

सभागृहान्निर्गच्छत्सु सर्वेषु सभ्येषु सा विकृतमतिरङ्गना प्रथमं रुद्रभटमनुससार। आलोक्यैव तां विरतवचा रुद्रभटो मनाग् भीतः सकोप इवानेकश ईक्षमाण आसीत्। सापि च मत्तेव तन्मुखदत्तदृष्टिः कदाचिद्धसन्ती, कदाचिच्च वक्षःस्थललम्बिनं विमलमसिं पाणिना समादाय जिघांसुमिवात्मानं दर्शयन्ती तस्थौ। सर्वमपीमं मतिविकृतिपरिणाममुत्प्रेक्षमाणाः प्रेक्षकाः केवलमीषद् विहस्योपेक्षया पुरः प्रययुः। मतिविकृतिसमुद्भवं तद्व्यापारमीक्षमाणो रुद्रभटस्तु सकृदपि न जहास। मुहुर्मुहुरन्येभ्योऽप्यधिकं तामीक्षमाणोऽपि। सोऽनाहतवद्दर्शनमात्मानं दर्शयति स्म

सहानुयायिभिर्गते रुद्रभटे कमपि प्रतिपालयन्तीव नीला राजपथेऽस्थात् कंचित् कालम्। अत्रान्तरे प्रासादात् प्रतिनिवर्तमानोऽमात्यस्तां भुवमुपायात्। एकतस्तस्य करकलितामात्यपाणिर्मुरारिः शनैः पदानि प्रक्षिपन् सानन्दमचलत्। अन्तिकमुपगतं मुरारिमालोक्य झटिति पुरोगता विनमितपूर्वकाया सा "वत्स मुरारे" इत्युक्त्वा तं कपोले चुचुम्ब। तद् दृष्ट्वा सामात्याः सर्वेऽपि परिजनाः विस्मितास्तस्थुः। राजसभायां खड्गपाणिमेनामालोकितवन्तो राजपुरुषाः केचित् संप्रति विनमिताङ्गीं पुरः स्थितामालोक्य तां मुरारिजिघांसयैवोपस्थितां मन्यमाना सावेगमग्रतो बभूवुः। परं चुम्बितमुरारिं तामालोक्य सर्वेऽपि विगतसाध्वसाः कौतुकोत्फुल्ललोचना यावदन्योन्यमुखानीक्षन्ते तावदेव विहायामात्यपाणिमञ्जसा मुरारिमपि तां प्रति धावन्तमीक्षमाणास्ते परां काष्ठां विस्मयस्याधिरुरुहुः। अमात्यो विरम्य कीलित इव तस्थौ। "धात्रि, परित्यज्य मां क्वासीस्त्वं गता कालमेतावन्तम्?। एह्येहि। नय मां समीपं मातुः" इति मुरारेर्वचनमाकर्ण्य तु स स्तम्भित इवाभात्। स नीलामप्राक्षीत्—मुग्धे, कथं ते परिचयोऽनेन सह बालेन। किमभिधानं ते?। का त्वम्। कुत्र तव निवासः" इति।

परं प्रत्युत्तरं दातुमनिच्छतीव सा द्रागेव मुरारिमपसार्य मतिविकृतिमभिनयन्ती मनाग् विदूरस्थिता क्षणं हसन्ती, क्षणमुत्प्लुतिमाचरन्ती क्षणं स्वशिरोरुहगुम्फिताः श्वेतपुष्पमञ्जरीराकृष्य नर्तयन्ती, "गच्छ वत्स गच्छ । कस्त्वं हन्ति यं देवो रक्षति" इति प्रोच्चैरालपन्ती विरम्य हास्यात् तारस्वरेण रोदितुमारेभे । रोदने पुनरेतस्या मोद एव दुःखादधिकतरः स्फुटमभूद् गोचरः प्रेक्षकाणाम् । अचिरादेव वलितवदनोत्प्लुतिमिव समाचरन्ती सा सरभसं दूरं पलायांचक्रे । अमात्योऽपि सकुतुकं तामीक्षमाणो भूयः परिगृह्य पाणी मुरारेः स्वहर्म्याभिमुखः प्रययौ ।

महाराजेनामात्यहस्तविन्यस्तः सत्यमतितरामनर्होऽभून्न्यासः । केन ह्युपमीयेत मूल्यं प्राणानाम् । एष च बालजीवः पितृहीनः प्राणसंशये पतितः । राज्यलोभाच्छाववृत्तानुकूलेनाप्यमात्येन नाद्याप्यासीद् स्फुटं दूरीकृतं राजद्रोहाचरणमात्मीयम् । अपि च शक्येऽपि प्रासादपरिरक्षणे सचिवसाद् विधाय बालं विश्वासविशेषं दर्शयता राज्ञा बहुंशतो निर्वापित एवाभूद् हृदयगतो राजद्रोहपावकोऽमात्यस्य । "परिणतवयाः प्रसृतिविकलश्च संप्रति महाराजः । अत ऊर्ध्वमेतस्य निधनात् सुखलभ्ये राज्यपदे किमित्यद्य राजद्रोहदोषेणात्मा दूषणीयः । राजविश्रम्भभाजनसंभवोऽपि गरीयानेव गौरवो जनकृतः । किमित्येतावतैव न स्थेयं मयाऽद्य तुष्टेन ? । निजचरणसमर्पितमिमं कुमारं मत्करे न्यासीकुर्वता महाराजेन स्वात्मनोऽप्यधिकतर आविष्कृतो मयि विश्वास इति प्राङ्निर्णयादस्य बालस्य नातः परमतितरां प्रोत्साहयितव्यो रुद्रभटः" इत्यादिभिर्विचारैः शनैः शनैः कृतं पदं हृदयेऽमात्यस्य ।

मनसा पूर्वमाचरितानि पापानि मुहुर्मुहुः स्मृतिपथमाययुरेतस्य । यामयद्वमुद्वेगकारीणि पूर्वकर्माण्यात्मनश्चिन्तयन्नासने समुपविशति भवन आत्मनस्तावदेव नररूपतामुपगतो निजदोषगण इव मूर्तः प्राक्तनः

संलक्ष्यमाणो रुद्रभट एत्य पुरस्तिष्ठन्नवादीत्—" स्वसमीप एव स्थापयेत् कुमारं महाराज इति क्षणमासीत् ससाध्वसं हृदयं मे सभायाम् । परं महाराजेन कुमारममात्यसात् कारयन्त्या देव्या दर्शितैव साफल्यावसानता नः प्रयत्नानामिति मे तर्कः । महाराजसमीपगतस्य न स्यात् सुलभमासादनं नः कुमारस्य । किन्त्वमात्यकरसमर्पिततयैवैतस्य वयमंशतः । समीपगतासिद्धय एव । तथैव किमस्माभिरत ऊर्ध्वमनुष्ठातव्यमित्यत्र विषयेऽस्मान् पन्थानं दर्शयितुममात्य एवाधिकृतो गुरुः । तत् कतमं पन्थानमनुसर्तुमस्मानुपदिशति संप्रत्यमात्यः ? " इति ।

एवं स्फुटमप्यनुयुञ्जानं रुद्रभटं दोलयमानचेताः स्खलितवागमात्योऽवादीत्—या भूमिका मयाङ्गीकृता संसदि पुरो महाराजस्य सैव कंचित् कालमतः परमपि मयाऽवलंबनीया । अतो मनसा स्वीकृत भवत्पक्षस्यापि मम बाह्यतो राजनिष्ठाप्रदर्शनमतितरामावश्यकं कंचित् कालम् । अपि च कुमारग्रहणादग्रहणमेव महीयसे वो लाभाय । न श्रृणोति कुमारार्पणप्रार्थनां महाराज इति प्रजाप्रक्षोभसाधकममोघं यदि समासाद्यते भवद्भिः साधनं तन्न किं कुमारग्रहणादग्रहणमेव लाभवत्तरं वः?।

" परं न किं ततोऽपि शोभनतरं कुमारग्रहणं बलिदानं च ? । बलिदानतोषिता हि देवी सर्वेष्वस्मासु स्वाशिषं वितरिष्यति । आशीर्वलाच्चैतस्यामः अनभिमतबलिदाने प्रवृद्धमन्यौ महीभुजि न चिराद् राज्यक्रान्तिं कारयिष्यामः " ।

**अमात्यः**—परं भवदधीनतां नीते कुमारे महाराजविश्वासघातदोषो मात्रभिपतेत । न तथा करणमुचितमंशतोऽप्यदृष्टफले भवन्ते क्रान्तिकार्ये ।

रुद्रभटः सविस्मयोऽभाणीत्—तत् किं अधुना मन्त्रिमहाराजावुभावपि नः कुमारप्राप्तेः परिपन्थितामेष्यथः ?। अनवाप्तविश्वासघातदोषं यदि कार्यं चिकीर्षुरस्माकममात्यस्तद्यमुपयुज्यतामुपायः । अमात्यस्य

विश्वसनीयतां परिरक्ष्यास्माकमसंशयमसौ भविष्यति कर्ता कार्यस्य। अमात्येन स्वगृहे परिरक्ष्यमाण एव बालेऽस्माभिरपहरणीयः । ततश्चसह महाराजेनास्मासु दर्शितकोपेन भवितव्यममात्येन । न तथाकरणे वयं परिपन्थियोऽमात्यस्य । जनितप्रजाक्षोभेषु पुरःस्थितेष्वस्मादृशेषु प्रबलेषु विपक्षेषु सचिवविहितं विश्वासघातं विचारयितुं लब्धावसर एव न स्यान्महाराजः ।

परमेवं व्यग्रचित्तोऽभूत् संप्रत्यमात्यो यत् किमुत्तरं स्यात् समुचितं रुद्रभटस्यैतावदपि स ज्ञातुं न शशाक । अतः स प्रत्युवाच— मदधीनत्वादेव कुमारस्य नातिदूरं यशो वः कार्यस्येत्युक्तपूर्वमेव भवद्भिः । तदधुना गत्वा भवद्भिरन्यानि कार्यसाधनानि कथं यथाकालं सफलानि भवेदुस्तच्चिन्तनीयम् । अहमद्य विश्रम्य कुमारार्पणमधिकृत्य मदीयमुत्तरं वः श्वो निवेदयितास्मि ” इत्युक्त्वाऽमात्यो रुद्रभटं विसर्जयामास ।

इति सप्तदशः परिच्छेदः

## -- अष्टादशः परिच्छेदः --

( गतं सरितं सरित्सलिलम् )

नहि नहि बिन्दू एतौ पयसो
बन्धू खल्वेतौ ।
परस्पराभ्यां निष्ठुरमनसा
विधिना च वियोजितौ ॥१॥
उभयोरेको भुवि निजभाग्याद्
मौक्तिकतां यातः ।
परमपरोऽस्मिन् क्वचिज्जगति खलु
पङ्के संपतितः ॥२॥
श्रीमान् कश्चिन्मौक्तिकहारेऽ-
ग्रथ्नात्तन्मौक्तिकम् ।
स पङ्कबिन्दुः कमलं यातो
यद्भूज्जलभूपकम् ॥३॥
जघास कश्चिद्धंसः कमलं
तदेव स च बिन्दुः ।
हंसकुक्षिगो दुःखमुवास हि
दूरे यद्बन्धुः ॥४॥
अथ तां मालां स एव हंसोऽ-
गिलत् कदाचिद् यदा ।
परस्पराभ्यां मिलितौ बन्धू
नृत्यमकुरुतां मुदा ॥५॥

सह मुरारिणा स्वहर्थिमुपगतोऽमात्य श्चण्डमतिः स्वसमीपस्थापितकुमारः क्षणमपि तं चक्षुषो न वियोजितवान् । ऊढभार्यात्रितयस्यापि दूरीभूतपत्नीसहवासस्यास्यालयो हि नासीदल्पकिङ्करपरिवृतः । विविधकार्यनियुक्तास्तत इतो भ्रमन्तो बहवो बभूवुराज्ञाप्रतीक्षास्तत्र दासा दास्यश्च । परं "राज्ञा स्वयमात्महस्ते न्यासीकृतोऽसौ भृत्याधीनतां नीतः कदाचिद बलिदानसमुत्सुकमानसैः शाक्तैर्धनदानेनान्येन वा केनापि व्याजेन तेभ्योऽपहृतः स्यात् । तथा जाते चैवं मयि विश्वस्तचेतसो महाराजस्याहं वृथा रोषपात्रं भवेयम्" इति चिन्तयताऽमात्येन नायं कस्यापि दासस्य दास्या वा हस्ते समर्पितः। अपि च हस्तस्पर्शादारभ्यैव मुरारेः स तथा समाकृष्टचेता बभूव यथा परित्यक्तसकलकर्मा स तन्मुखनिहितदृष्टिरेव स्थातुमियेष । मुरारिरपि प्रकृत्यैव तैर्गुणैरासीदुपेतो ये न चिराद् यस्य कस्यापि चेतः सुतरामाचकृषुः । नीलाभवान्यवलोकितादीनामङ्गनानां कथमनेनाकृष्टपूर्वाणि मानसानीति विदितमेव वाचकवराणामखिलानाम् । त्रिचतुराण्येव दिनानि प्राप्य परिचयमेतस्यावलोकिता मृणालिन्यपि च तथाऽस्मिन् सिष्णिहतुर्यथा नृपाधीनं तं विधाय विहारं प्रतिनिवर्तमाने उभे अपि ते चिरं विफलबाष्पनिरोधनप्रयत्ने बभूवतुः । सामान्यशिशुसहजं रोदनं तु न कर्हिचिदस्मिन्नलक्ष्यत लब्धावकाशम् । सर्वदाऽनुयोगपरोऽनन्यचिन्तिताभिः क्रीडाभिः स्वकल्पिताभिः प्रौढानामप्यसावरीरमन्मानसानि। जिज्ञासुतया प्रकृतेर्यस्यकस्यापि नयनगोचरस्य वस्तुनो विज्ञानविशेषमप्राप्य जनादन्तिकस्थान्नासौ स्तब्धतामयासीत् । तथैवान्तरान्तरा तदानयनगोचरीभूतं स्मितं हास्यं वा तथा विमोहकमभूद् यथा महादुःखदुःखितोऽपि जनः प्रेक्षको विस्मृतात्मदुःखः क्षणमवाप्तमोदोऽजायत ।

स्वालयमुपगतोऽमात्यो भक्ष्यपात्रमेकमानाय्य भृत्यहस्तेन मुरारेः पुरः स्थापितवान् । मनागिव भक्षणं विडम्बयन्नगृहीतभक्ष्य एव मुरा-

रिस्त्वमात्यकरमादाय करेणात्मनो हर्म्यपर्यटनस्पृहामात्मीया स्फुटीकृतवान्। न निरोद्धुं शशाकामात्यस्तां स्पृहां बालस्य । बालभावेऽपि जिज्ञासुप्रकृतितां तदीयामालोक्य मनागिव कौतूहलस्पृष्टहृदयोऽमात्यो न निरोद्धुं शशाक तां स्पृहामेतस्य । अतः करकलिततत्करोऽमात्यो यत्र यत्र स गन्तुमादृतोऽलक्ष्यत तत्र तत्र सह तेन संचचार । एवं विविधवस्तुजातमभिवीक्षमाणो मुरारिरेकस्माद् विभागाद् विभागान्तरं सुचिरं परिभ्रमन् क्रमेणाभूतलावलम्बितस्य, विचित्रभङ्गिविरचनाविभूषितप्रान्तस्य मनोहरस्यातिमहतो मुकुरस्यैकस्याभिमुखमयासीत् । प्रकृत्यैव समाकृष्टचेतसि तस्मिन् स्वप्रतिबिम्बमादर्शेऽभिवीक्षमाणे पुरो गतोऽमात्योऽपि यदृच्छया दृश्यमानायां स्वाकृतौ दृष्टमुरारिमुखसादृश्यः सहसा समुत्पन्नविस्मयः स्वादर्शगतच्छायासमासक्तलोचनः “कथमेतावत् सादृश्यमाकृतावावयोः ” इति सुचिरं पर्याकुलितचेतश्चिन्तयन् मनस्यकार्षीत् “ पथःपूरपतितो मे पुत्रकः प्रयातः पूर्वमेव पंचतां सह मात्रा । तत् को नु भवेद् बाल एषः ? । कार्त्स्न्येन मादृश एवास्य लोचने । अनन्यादृशी नासिका । न स्तोकोऽपि विशेषो मुखाकृतौ विना वयसः । अपि भवेदयं कोऽपि दास्युदरनिर्गतः कथमप्यद्य यावत्तया परिवर्धितो मदीय एव सूनुः ? । अथवा त्रपानिह्नवचिकीर्षया तया क्वापि परित्यक्तोऽसौ हस्तपरंपरयाऽग्निवर्णभार्याया हस्तमुमगतः स्यात् ? ” इत्यादीनि चिन्तयतोऽस्य दृष्टिर्यदा यदा मुरारेर्नयनयोः पपात तदा विहसन्तं मुरारिमालोक्य स्वयमपि हसन्नमात्यो हास्यमप्यास्यगतमतितरामभिन्नाभमतिमनोहरं वीक्ष्य तु भूयोऽधिकतरमेव विस्मितमना जज्ञे ।

अथ परित्यज्य मुकुरं पुरो व्रजतो मुरारेः करमात्मनः करेण दृढतरं दधानोऽमात्यः सह तेनान्तःपुरविभागमयासीत् । तत्र काचफलकान्तर्गतान्यालोक्यालेख्यगतानि महिलाप्रतिच्छंदकानि द्वित्राणि

वनितोपयुज्यमानानि च तानि तानि वस्तून्यनेकानि वनिताभाववीक्षणेन विस्मित इव मुरारिरचिरादप्राक्षीत्—" अहो, क्वास्ति गृहवर्तिनी मातेह ? "। बालाननविनिर्गतेनानेनानुयोगेन सहसा समुद्भूतहास्यमास्यं दधानः प्रत्युत्तरमजानन्नमात्यः क्षणमिव तूष्णीं स्थित्वा स्मृत्युपस्थापितप्रथमपत्न्यवसानदशो झटिति प्रत्यवादीत्—" वत्स, पयःपूरपतिता गृहमाता नद्यां निमग्ना " इति ।

श्रुत्वैतन्मुरारिरञ्जसा प्रोवाच—मम माता नद्यां निमग्नेति मुहुः कथयति कथां मे धात्री । अपि तथैवैषाऽपि निमग्ना ? ।

एतदाकर्ण्य तु पुनः पस्पर्श हृदयं विस्मयोऽमात्यस्य । " कथमिवायं बालः किमपि हृदये कृत्वैवं मन्त्रयेत ? । अनुल्लङ्घितशैशवोऽयं कथमेवं शक्नुयात् कथयितुम् ? । अथवा कथैषा कथककथिता । कथायां सर्वं स्वाभीष्टं संभवति । ' यथा धात्री कथयति तथैव किमेतत् ' इत्यनेनानुयुक्तमेव । तत् कथानिवेदनकर्मण्येवायं योजनीयः । तेन चायं जल्पनव्यापृतस्तिष्ठेदहमपि च दूरीभूतोत्तरावकाशो भवेयम् " इति कृतमतिरमात्यो जगाद—" वत्स, कथय कथय तां कथां मे या ते धात्री कथयति । कुत्र रे वत्स, सा धात्री ते ? " इति ।

यथा कथाश्रवणं तथा कथाकथनमपि सुतरां प्रियं बालानाम् । अत एवं पृच्छताऽमात्येनाभीष्टकारिणेवाभावि मुरारेः । स झटित्यवोचत्—" अहो न किं प्रातर्दृष्टा मे धात्री भवद्भिः ? । अविदितं परिचुम्ब्य मां पलायिता सा । अहो वञ्चकत्वम् ? । तयैव कथिता सा कथा । मन्ये न सत्यैषा । कथयति साऽनेकशो मे—निधाय मामान्दोलिकायां विधूननपराऽऽसीन्मे माता । सहसाऽभूद् वृष्टिर्महती । नीता दोला पयःप्रवाहेन । माताऽपि नीता । देवगृहं गता । केनचिदहं प्राप्तः । धात्र्याऽहं क्रीतः । मात्रे मे समर्पितः । मातरित्युच्यते

मया मे माता । धात्रीं च धात्रीं वदामि । अतः सा कुप्यति मह्यम । अपि प्रापयसि मां मातरं मे ? ।

" देवगृहं गता मे मातेति कथयित्वा पुनर्मातुरन्तिकं प्रापयेति किमप्यसंबद्धमेवायं भाषते । तथापि गभीरार्थं किमपि वच एतस्य " इति मनसि भावयतोऽमात्यस्य हृदयं न केवलं प्रेम्णा द्रवीभूतं परमीषदस्वास्थ्यमप्युपयातम् । " प्रकाममानुरूप्यं ममाकृतावेतस्य, पत्नी मे सह पुत्रेण निमग्ना प्रवाहे पयसः, एतस्मिन्नपि चावयोर्वृत्तान्ते सारूप्यं निवसतीति नूनं कममि वैचित्र्ययोगमुत्प्रेक्षते मे मनः " एवं चिन्तयन्नप्यपरिच्छेदपर्याकुलमनाः स समुद्धृत्य मुरारिमकामत एव पत्न्याः पयःपूरपतनस्थलं यावद् बभ्राम । पयःप्रवाहवाहितत्वात्तस्य गृहविभागस्य रिक्तीभूतं तत् स्थलमुपागतोऽमात्यः स्मृतपत्नीनिधन-वृत्तान्तो दुःखविवशीभूतहृदयः क्षणमुदश्रुनयनस्तस्थौ ।

अत्रान्तरे द्वाःस्थः कश्चिदागत्य न्यवेदयत्—" भ्रान्तचित्ताऽङ्गना काचिद् द्वारि तिष्ठति वदति च सनिर्बन्धं ' दिदृक्षेऽहममात्यम् ' इति । सतर्जनमनेकशो निःसारिताप्यस्माभिर्न परित्यजति सा द्वार-देशम् । तत् किमादिशत्यमात्यराजः ? " इति ।

श्रुत्वैवैतज्झटिति नियम्य शोकावेगममात्योऽभाणीत्—" राजमार्गे प्रातरस्माभिर्दृष्टपूर्वयैव भाव्यमनयाङ्गनया । तत् सत्वरं प्रवेशय तामुप-वेशय च गृहान्तर्वर्तिनि विश्रामस्थले मे " इति ।

अथ तथेत्युक्त्वा निर्गते द्वाःस्थे " वत्स, अपि दिदृक्षसे त्वं ते धात्रीं वञ्चयित्रीं या प्रभातेऽविदितं त्वां परिचुम्ब्य न चिरात् पला-यिता ? " इत्युक्त्वाऽमात्यः स्कन्धस्थापितमुरारिरेव स्वविश्रामस्थान-मन्तर्गतं निववृते ।

अमात्यविश्रामावासविभागद्वारि वर्तमानां नीलामालोक्यैव झटि-यमात्यस्कन्धावतीर्णो मुरारिर्द्रुतपदमुपेत्य पाणियुगेनात्मनो नीलागलं दृढं निपीडयन्नवादीत्—"किं मां परित्यज्य गताऽसि ?। तिष्ठ। ताडयाम्यहमेवं त्वाम्" इति वदन् स तां सप्रणयं मुष्टिभिर्मुहुः प्रजहार। साऽपि वात्सल्यात् पाणिना तस्य पृष्ठदेशेंऽसयोरानने च स्पृशन्ती कपोलयोर्मुहुः पर्यचुम्बदेनम्।

एतदालोक्य तु परां भुवमुपागमद् विस्मयोऽमात्यस्य। स्वासनोपविष्टः स वनितां तामन्तराहूय द्वाःस्थमादिदेश—"प्राक् प्रतिनिवर्तनादस्या अङ्गनाया न कोऽपि त्वयाऽन्तः प्रवेशयितव्यः" इति। "यथाऽऽज्ञापयत्यार्यः" इत्युक्त्वा पुनर्द्वारभुवं समाश्रितवति तस्मिन् भृत्यवरेऽमात्यराजः प्रोवाच—"वनिते, वत्सलतमोऽयं विलोक्यते ते बालः। तद् ब्रूहि कस्ते संबन्धः सहानेन?" इति।

तच्छ्रुत्वा बलादेव भ्रष्टमतितामात्मनोऽधिकतरमभिनयन्ती नीलाऽऽचचक्षे—भद्रमुख, आत्मैव त्वयैवं प्राक् प्रष्टव्यः। अपि ज्ञायते त्वया को नामानेन तव संबन्ध इति ?।

**अमात्यः**—अलं कोपेन। यद्यहमेतदज्ञास्यं तद् द्रागेव तेऽकथयिष्यम्। परं त्वया ज्ञायते स्वसंबंधः सहानेन। सुपरिचितो हि दृश्यतेऽयम्। अत एव मयैवं पृच्छयसे त्वम्।

**नीलाः**—नासौ सुतो मे। तथापि मामकीनः सुत एव। प्रसादादेव भगवतः प्राप्नुवन्ति पितृतां पुण्यभाजः पुत्रस्यैतादृशस्य। सत्योऽयं लोकप्रवादो यद् दत्तमपि देवेनापह्रियते दैवेनेति। देवेनैव वितीर्णमेतत्त्वयि पुत्ररत्नम्। अपि च येनैव विधिनैतदपहृतं तेनैव पुनस्ते पाणौ स्थापितम्। तदत ऊर्ध्वं तावदप्रमत्तेन भाव्यं त्वया परिरक्षणेऽस्य।

**अमात्यः**—किं मदङ्गसंभूतमिदं पुत्ररत्नम् ?। तत् कथमिवैतदपहृतं विधिना ?। अपि च ममाप्यविदितोऽयमर्थः कथमुपगतः

परिचयं ते ?। न नूनं भवती भ्रष्टमतिका यथाऽन्यैर्दश्यते गृह्यते वा। तद् ब्रूहि कृपया स्फुटं मेऽखिलं तद् यदत्र विषये विदितं ते। ‘नायं मम सूनुः परं ममैवायं सूनुः’ इति यदुच्यते तद् भवती विवरीतुमर्हति।

नीला–स्फुटार्थमेवैतद् वचनं मे। अनात्मजेऽप्यात्मज इव वात्सल्यं क्वचित् कस्यचित्। नाहं माताऽस्य कुमारस्य। परमात्मज इवास्मिन् स्निह्यन्ती काचिदहमस्म्यङ्गना मन्दभाग्या। क्रीतोऽयं मया मत्स्यबन्धादेकस्मात्।

“तत् किमयं कस्यचिन्मात्स्यिकस्य सूनुः ?”।

“नहि। दोलायामारोपितोऽसौ ग्रामापगापयःपूरेणोह्यमानो मत्स्यान् गृह्णतोऽस्य जाले सदोल एव पतितः”।

“कस्य सदनादपवाहितोऽसौ स्रोतसा ?”।

“यस्य सदने संप्रत्यहं संलापपरा”।

“किं मामकीनात् सदनात् ?। ममापि सूनुरेवमेव निम्नगास्रोतसैवासीन्नीतः। तत् किमयं स एव भवेत् सूनुर्मदीयः ?। किमिव वृत्तं मातुरेतस्य या सह सुतेनासीत् पयःपतिता ?”।

“दिवं गता सा वराकी”।

“यदि तस्माद्दिनादारभ्याद्य यावदत्रैव नगरेऽवर्ततायं बालो, यदि च मदीयसूनुताऽस्यासीत् सुविदिता ते, तत् किमिति तदैवानीयायं मे त्वया न समर्पितः ?”।

“भद्रमुख, अविदिततत्पितृकाऽऽसमहमप्यद्य यावत्। बुद्धविहारवर्तिन्या अवलोकितायाः करेऽमुं न्यासीकृत्य प्रतिनिवृत्तया मया प्राग् दिनत्रयाद् यदृच्छयाऽज्ञायि यदयममात्यसूनुश्चण्डभानुरिति। नो चेदकालहीनमानीय तवैव करयोः समर्पितः स्यात्। भ्रष्टमतिरियं नीलेति जनैर्ज्ञायमानाऽप्यहमसंशयमेतावद् वेद्मि यद् बौद्धभिक्षुभ्योऽपि

पितैवामात्यपदवर्ती स्वयमर्हतितरां प्राणसंशयपतितं परिरक्षितुमेनं कुमारमिति ''।

" कथमज्ञायि त्वया प्राग् दिनत्रयाद् यदयं मदीयस्तनय इति?"

" किं पृच्छसि कथमज्ञायीति ?। एष करण्डक एवैतदखिलं ते निवेदयिष्यति "।

इत्युक्त्वा विघटितग्रन्थिर्वसनान्तादाकृष्य तं करण्डकं पुरस्तादमात्यस्य प्रक्षिपन्ती प्रोवाच—" उद्घाटयैनम्। देवैदेवकरैरयमङ्कितः" इति ।

ततो झटित्यौत्सुक्यान्निपुणं निरीक्षमाणोऽमात्यो वाचयन्नक्षराणि सहसैव चेतनामत्याक्षीत् ।

अथाञ्जसैव भूमिस्थापितमुरारिर्नीला ससंभ्रममुत्थायानातिदूरवर्तिनि रजतभाजने स्थितं जलं मूर्धनि नेत्रयोराननें च क्षिपन्ती सुचिरं जीर्णवसनान्तेनात्मनो वीजनपरा तस्थौ ।

घटिकार्धमात्रेण लब्धसंज्ञोऽमात्यो विरतवाक् बाष्पगद्गदं रुदन् किमप्यसंबद्धमाभाषमाणो जजल्प—सत्यमेतद् धात्रि, ममैवायमात्मजः। पयःपूरनिपतितोऽसौ भाग्येनैव भूयस्त्वत्करेण प्रत्यानीतः । वराकी सा मे भार्या शिशोरस्य माता दूरीभूता। पत्नीपुत्रगतस्य द्विविधस्यापि प्रेम्णो मेऽतः परमयमेक एव स्यादास्पदं बालः"। इत्युक्त्वा स्वाङ्कस्थापितमुरारिरमात्यः सस्नेहमनेकशः करेण परिमृशन्नेनमसकृच्चुचुम्ब ।

नीला तालिकावादनपरा समुत्थाय नृत्यं कुर्वत्युज्जगार—" प्राप्ता पुनः पयस्विनी पयसा पयस्विन्याः। अवसितं मे जन्मकार्यम् । संप्रत्ययं कायः, स खलो रुद्रभटः, तच्च सरित्तटवर्ति पितृवनमेतावानेवावशिष्टो विषयो मे विचारणायाः । अमात्यराज परिपाल्यतामात्मीयोऽयमात्मजः । एषाऽहं प्रस्थिता स्थानादस्मात् । द्रष्टव्यो हि मयाऽध्वा स्वानुकूलः "।

इत्याभाष्य जिगमिषुर्यावद् द्वारान्तिकमायाति तावदेव द्वारान्तर-प्रविष्टो द्वाःस्थः कश्चिन्निवेदितवान्–" अमात्यराजदिदृक्षया संप्राप्तो रुद्रभटमहाभागो द्वारि तिष्ठति " इति ।

श्रुतिपथमुपगत एव नाम्नि रुद्रभटस्य कोपपात्रकस्फुटद्गात्रयष्टि-र्नीलाऽभ्यधात्–किमागतः स खलो भूयो दिदृक्षया ते ? । प्रविशतु द्रागभिमुखं मे । समक्षमेव भवतः कर्तितकण्ठनालेयं नीला यापयिष्यति यमालयं तम् " इति ।

श्रुत्वैतदमात्यः कथितवान्–" बहिर्द्वारवर्तिन्यासन एवोपविशतु संप्रति रुद्रभटः । पश्चात् प्रतिसंदिष्टे मया प्रवेशय तम् " इति ।

अथ बहिर्गते द्वाःस्थे नीला सावेगमुदगिरत्–चण्डाल, दुरा-त्मनाऽनेने रुद्रभटेन संमन्त्र्य जनितलोकक्षोभः प्रजाकोपसामर्थ्याद् राज्यपदं जिघृक्षसि किम् ? । पत्नीमात्मनः पालयितुमशक्नुवंस्त्वं कथं प्रभविष्यसि प्रीणयितुं पालयितुं वा प्रजा एताः ? । धर्मकञ्चुक-प्रवेशिना व्याजोपजीविना कर्मचाण्डालेन तेन रुद्रभटेन संगतस्य ते स्वार्थधिया समाकीर्णं संप्रति मानसं कार्त्स्न्येन । त्वयैव प्रापितः स नराधमो माहात्म्यं मिषेण । किं राज्येन ते परस्य ? । किं हीयते तेऽधुना विना राज्यम् ? । समक्षं राज्ञोऽप्रतिमामभिनीय राजभक्तिमेव मन्त्रणा कपटप्रबन्धानां स्वभवने ? । मूर्तो धर्मः स महाभागो नरपतिः । तद्विश्वासघातमेवमातन्वानः कदा नु भवानुत्तरिष्यति पातकं तज्जनितम् ? । शाक्तधर्मसंवर्धनाय बालानपि बलीकर्तुमुद्यत-स्त्वम् ! । किमयमेव विधिरलं संवर्धनाय ते धर्मस्य ? । परापत्यवितरणे किं छिद्यते ते ? । परं संप्रत्येव मयाऽयं वितीर्णस्ते चिरविनष्टस्तनयः । अपि सज्जो भवानेनमर्पयितुम् ? । देहि समक्षं मे । एषाऽहं तेऽमर्षणा देवी भवान्येव पुरो वर्ते । अपि विदितं ते चरितमस्य रुद्रभटस्य ? । अपि ज्ञायते त्वया यदनेन नरपशुनाऽद्य यावद् धर्मव्याजेन मद्यं पाययित्वा

बलाद् भ्रंशिताः सहस्रशः कन्या इति ?। पश्य—पुरः स्थितैषा तथाविधैवा-स्म्यहं कन्यकैका । तमनेन कृतमपकारं प्रत्यपकारेण निर्यातयितुमेवास्ति मयाऽयमसिः सर्वदा संरक्षितः समीपे मे । परं तदहमेव चिन्त-यिष्यामि कथं घटनीयमिति । आहूय तमिह दुरात्मानं रुद्रभटम् । शुश्रूषुरेवाहं गूढमन्त्रणं युवयोः । मुरारिमालोक्य मुखपतितमेव स्वभक्ष्यं मंस्यते स वृकः । परं वृकहन्त्र्येषा भ्रष्टमतिर्व्याघ्री तदन्तिक एव तिष्ठतीति कथं नु जानीयात् स प्रागनुभवात् ?।

ऊरीकृतनम्रभावोऽमात्यो निपत्य पादयोरेतस्या अवादीत्—“ वनिते, को नु गणयेत् त्वां भ्रष्टमतिकाम् ?। देवी त्वं मूर्तिमती। त्वत्प्रसादादेव तव मुरारिरिम च चण्डभानुरयं मया भूयः संप्राप्तः । न नखमात्रमप्येतस्यात ऊर्ध्वं द्रक्ष्यति स रुद्रभटः। पश्य समक्षमेव भवत्याः कथमहं सत्करोमि तं रुद्रभटम् । तिष्ठ त्वं द्वारान्तर्हितशरीरा समी-पवर्तिनि प्रकोष्ठे तस्मिन् । ”

“ तथा ” इत्युक्त्वा कक्षान्तरे द्वारान्तरितविग्रहं स्थितायां नीलायां, दूरीकृतावरणं सजलजलधरप्रभाभासुरमसिमेकं निधाय चरणान्तिके भृत्यमुखेन रुद्रभटमन्तर्गृहं प्रवेष्टुमादिदेशामात्यः ।

समाकृष्टासिरेवात्मानं सत्करोत्यमात्य इति वीक्ष्य विस्मितमना अपि रुद्रभटो, राजसभासमारब्धपूर्वं कपटनाटकमेवाद्यापि नाट्यतेऽनेनेति मन्यमानः सस्नेहमिवाभाणीत्—नाद्याप्युपस्थितममात्यराज, प्रयोजनमसि-मैनंविधेन । राजभक्तिं भवदीयामस्पृष्टदोषां परिरक्षितुं स्वयमङ्गीकृत-कुमारापहरणदोषैर्यथानिर्दिष्टं कृतकार्यैरस्माभिः कदा धर्मकार्य-करणायागन्तव्यमिति प्रष्टुममात्यराजमेकाक्येवाहमस्म्यद्य संप्राप्तः । नयनसुभगेन पथा क्रियमाणं स्वाभीष्टसाधकं कार्यं सर्वदा प्रशंसास्पदं भवति सर्वेषाम् ।

परं सक्रोधमुच्चैः परुषाक्षरमाबभाषेऽमात्यः—"कुमारापहरणं भवद्भिः कथितमिति मयाऽङ्गीकृतमेवेति नास्त्येव । महाराजेन मत्करसमर्पितोऽयं बालो न्यासः । महाराजायैव मयाऽयं प्रत्यर्पणीयः । तदलमतः परं बालबलिप्रलापेन । अहो सामर्थ्यं राज्यक्रान्तिकरणे वः ? । सर्ववैदिकपरिषद्गताः सर्वे यूयं वैदिका नाम पिण्डीकृत्यानीता आमलका एव । राजसभायां यथापेक्षं सकोपमाभाषितुमपि न पारितं युष्माभिः पुरो राज्ञः । अधुना तु कथमपहरिष्यन्ति कुमारममुं भवन्तः ? । प्रथमममात्योऽयं प्राणांस्त्यक्ष्यति पश्चात् कुमारो भवत्पाणौ पतिष्यति । स्फुटमेव कथयाम्यधुना वः—मदीयोऽयं कुमारः। सरित्पूरपतितोऽयं देव्यैव कृपया भूयो मे करयोरर्पितः। यदि बलिदानसमुद्यता यूयं तदात्मैव स्वीयः किमर्थं न वितीर्यते युष्माभिः ?। किमनभीष्टानि युष्मदङ्गानि भवान्याः ?। शोभनमेवैतदुपयोजितमञ्जनं भवान्या नेत्रयोर्मे । अपेहि । मा मे संमुखं मुखं दर्शय भूयः । आचारान्तराहितमतिर्यतस्त्वं स्वेच्छया यावच्छक्यमुद्धर्तुं शाक्तधर्मम् । यदि पुनर्बालबलिमधिकृत्य शब्दमात्रं वक्ष्यसि तदासिनाऽनेन रसनां स्वां छिन्नां द्रक्ष्यसि । तदपेहि द्राङ्मे पुरतः । न नखमात्रमपि कुमारस्यास्य मे यास्यति पुनर्गोचरतां चक्षुषस्ते" इति ।

एवमवमानितोऽमात्येन रुद्रभटः सर्वं सहसैव विपर्ययमुपगतं तन्त्रमात्मीयं विज्ञाय सुतरां चकितचेतास्तूष्णीमधोमुखो निरगात् ।

परित्यक्तगुहनस्थाना नीलाऽपि रोदनपराऽश्रुप्लावितमुखी समभ्येत्य गद्गदस्वरमभाणीत्—"मतिविकारदूषितया यन्मया स्वच्छन्दतोऽभाणि परुषं तत् क्षन्तुमर्हत्यमात्यराजः । कोऽत्र प्रतिकारो मदायत्तः ?। चेतनां त्याजयित्वा तेन नराधमेन भ्रंशिताऽहं तस्माद्दिनादारभ्य पापपिण्डमेवाकलयाम्यमुं कायम् । न जाने कदाऽस्य विसर्जनं भविष्यतीति । विस्मारिताऽहं मनाक् तद्दुखमनेन मे बालेन । मोघवर्णन-

प्रयत्नोऽस्मिन् मे द्रढीयाननुरागः । परमभाग्यान्मेऽस्यापि जीवितं पातितं संशये तेन नराधमेन । अधुनाऽहं वीतचिन्ता । परिरक्षतामप्रमत्तं ममायं वत्सः । एषाऽहं प्रस्थिताऽस्मि । नाहं पुनस्ते दृष्टिपथमेष्यामि" इत्युक्त्वा शर इव धनुर्मुक्तो नीला सावेगममात्यभवनमत्याक्षीत् ।

× × ×

मुक्तामात्यभवना नीला सरभसमसन्निहिताग्निवर्णं भवानीभवनमागत्य भ्रान्तचित्तामिव पाणिना किमप्यभिनयन्तीमश्रूणि च मुञ्चन्तीं भवानीमुपेत्य पुरस्तस्थौ । सतालिकं पुरो वर्तमानां नीलामालोक्य प्रत्यागतचेतनेव सा प्रोवाच–" भ्रान्तमतिके, कुत्रासीस्त्वं गता दिवसानेतावतो मां परित्यज्य ! " इति ।

**नीला**–भर्त्रा ते भवनान्निःसारिताऽहं किमन्यत् कुर्याम्? । भर्तुस्ते भवनमेतत् न भवत्याः । अधुनापि द्राक् प्रतिनिवर्तनं मनसि विधायैवोपागतास्मि ।

" किमर्थं तर्ह्युपागतासीह, हताशे ? "

" यथैका मे हृदयव्यथा दूरीभूता तथैव तवापि तां दूरीकर्तुम् । "

" कथमिव दूरीकरिष्यसि त्वं ताम्? "

" निवेद्य ते मोदजननीं वार्तां मुरारेः । "

श्रुत्वैवैतदानन्दनिर्भरा भवानी सावेगमुत्थाय नीलांसयोः पाणियुगमात्मनो निधायाननं स्वं नीलाननस्य निकटं कुर्वाणा प्रोवाच–" किं तत् । कथय कथय तूर्णं यद् विवक्षसि ' ।

**नीला**—कुशलं मुरारेः । नातः परं स्यादस्य कुशलं विघ्नितं केनापि । दूरीभूतामवेह्यस्य सर्वथा प्राणविपदम् ।

" कथमिव ? "

" नगरामात्यपदवर्तिनोऽस्य पितुरेव पाणावसौ पतितः । प्रविष्टं सरित्पयः सरितमेव " ।

" परं निर्घृणशाक्तपक्षपात्येवामात्य इत्युच्यते सर्वैः " ।

" एतदेवात्र कौतुकस्थानम् । निर्मूलयति सुतस्नेहश्छद्मानि छद्मिनाम् । सरित्पूरपतितोऽयमात्मन एव सूनुरिति यदा प्रत्यभिज्ञातमेतेन तदा मोदाभिभूतहृदयः स चिरं दूरीभूतचेतनोऽतिष्ठत् । मयैव स प्रत्यागतचेतनोऽकारि । दर्शितकृपाणेन तेन तर्जितो रुद्रभटः । कोऽधुना करिष्यति वार्तामात्रमपि मुरारेर्बलिदानस्य ? " ।

" केन खलु शयनान्मेऽपहृतो मुरारिः ? । "

" यो देव्याऽऽदिष्टस्तथा कर्तुं तेन " ।

" किं त्वयैव नीतः ? । किमित्यनिवेद्य मे नीतः ? " ।

तदाकर्ण्याविष्टेव नीला जगाद—अनात्मज्ञे, अनन्यादृशं मौर्ख्यं ते । यद्यहं तथाऽकरिष्यं तन्न त्वं मह्यं तमदास्यः, प्राणान् वाऽस्य परिरक्षितुं प्राभविष्यः । स्नेहलप्रकृतिरपि पतिदेवधीदोषसंस्पृष्टासि निर्मिता त्वं विधात्रा । पापस्यैव पुण्यधिया समाचरणे न न्यूनं ते मौर्ख्यं रुद्रभटात् । पततु ज्वलने सा ते धार्मिकता, त्वां च पशुतां प्रापयन् स ते धर्मः । पुराणवर्णिता चांगुणांगना त्वं मूर्तिमती । न किं पतिवचनानुवर्तिनी साऽतृतुषदतिथिमुलूखलावहृतमर्दितेन मांसेन सूनोरात्मनः ? । अहो मूर्खतायाः प्रकारः ! । यद्यहं तत्राभविष्यं तत् परित्यज्य बालकं बालपललिप्सुं तमतिथिमेव मुसलैरसकृदाहत्याहनिष्यम् । भवानि, कथयामि किमिति न जीवन्त्यपत्यानि ते । यदि जीविष्यन्त्यपत्यान्येतस्यास्तदसंशयमियं मोहात् कर्तिष्यति तानि बलिबुद्ध्या पुरो देव्येति चिन्तयन्तस्तेषां दयमाना देवा वियोजयन्ति तानि शैशव एव प्राणैः ! । कथमिव पृच्छसि किमर्थं न निवेद्य नीत इति ? । यद्यहं

तथाऽकरिष्यं तददत्तमुरारिर्भवती केवलमाक्रोशपरा भर्त्रे निवेद्य तं विदितमत्संकल्पमकरिष्यत् ।

एवं सावेगमाभाषमाणां नीलामालोक्याङ्गीकृतात्मदोषा भवानी प्रकटितमन्दहासा प्रोवाच—" भवतु । सर्वं तत्तथा यथा त्वं भणसि । त्वमेव मद् वत्सलतरा दक्षतरा च । अत एव रोचसे मे । अस्तु । मच्छयनादपहृत्य कुत्र त्वया नीतो मुरारिः कथं च त्वया ज्ञातममात्यस्यैव स सूनुरिति सर्वमधुना मे निवेदय तूर्णम् । ब्रूहि निःशङ्कम् । न कोऽपि सम्प्रति सदनेऽत्र, " इत्युक्त्वा दृढगृहीतनीलाकण्ठनाला भवानी बलात्तामासन उपावेशयत् । ततस्तां तोषयितुं नीलाप्यामूलात् सर्वं यथावृत्तमाचख्यौ ।

अथ भवानी भूयः पप्रच्छ—"क्व गत्वा त्वमधुना निवत्स्यसि ? ।

नीला—अवशिष्टैककार्याऽहमद्यापि । अवसिते तस्मिन् पितृवन एव स्यान्मे शाश्वतो वासः । अनर्होऽयं कायो निवस्तुं जगत्येतस्मिन् । प्रागनुष्ठानात् तस्य मे कार्यस्य मातुर्नन्दाया एवगृहमहमधिवसेयम् । सुशीला चतुरा च सा वृद्धा भाजनं मे प्रेम्णः । अनतीदूर एवास्या उटजस्य वर्तते स्मशानमित्युटजवास एव संप्रति मे लाभवत्तरः । तेन हि सान्निध्यं स्मशानस्य स्यादत्र मे भूयसे लाभाय ।

इत्युक्त्वा तालिकावादनपरा सा क्षणं नर्तितुमारेभे । नासीन्मतिविकारस्फूर्तेरेतस्याः कदाचिदप्यकालो नाम । यत्र कुत्राप्यसावनियतवेलमन्तरान्तरा प्रादुरभूत् । " अन्तिममेवैतदद्य ते दर्शनं मे भवानि " इति भाषमाणा साऽऽननमात्मनः सकृद् भवान्याः कपोले स्थापयित्वा समुत्प्लुत्य च पलायनपरैव भवनान्निर्जगाम ।

—इत्यष्टादशः परिच्छेदः—

# एकोनविंशः परिच्छेदः

## ( घोषगताः संलापाः )

यदि नृपतिपदं स्याद्धस्तगं मे तदाऽहं
परिणयगृहमेकं कारयेयं विशालम् ।
प्रथममथ समस्तान् बौद्धभिक्षूनुदूढान्
विगतसुरतचिन्तानल्पपापान् विदध्याम् ॥१॥

* * *

शमधनमृणयोर्विवाहहेतोः
स्वयमहमारचयेयमत्र वेदिम् ।
निजकचपरिमृष्टसर्वभागां
ननु मममूर्धसुमैश्च भूषयेयम् ॥२॥

परिसमाप्तत्वाद् गृहकर्मणामखिलानां प्राङ्गणवर्तिनि खट्वासने विरचितब्रह्मासना समुपविश्य निमीलितनयना जपमालिकामणीन् क्रमेण गणयन्ती नन्दाऽद्य सायं ध्याननिरताऽवर्तत । अवसितनगरपरिभ्रमणा नीलाऽपि स्वनिवासमिममुपगता चरणान्तिके नन्दाया वत्सतरीमेकां मूर्धनि पाणिना मृदु प्रहरन्त्यतिष्ठत् ।

अत्रान्तरेऽन्योन्यस्कन्धसमर्पितकरौ संलपन्तौ मृणालिनीशमधनौ निजनिवासाभिमुखमागच्छन्तावालक्ष्य नन्दाऽङ्कमापीडयन्ती पाणिना तामवादीत्—मातः, किं दृष्टं त्वयाऽन्योन्यबद्धभावमेतद् बुद्धविहारगतं युगलं त्वद्दिदृक्षयेत एवाभ्येतीति ? ।

अथ विच्छिन्नजपा नन्दाऽन्तिकमुपगतौ तावालक्ष्याभाणीत्— “ आगम्यताम् । बहुभिरहोभिरनुगृहीताऽहमद्य भवद्भ्यां दर्शनेन ” इति ।

अन्तिक एव गृहीतासनौ तौ वीक्ष्य नीलयाऽभाणि—अवसितधर्मप्रचारकार्याभ्यां भवद्भ्यां मन्ये समारब्धमधुना प्रेमप्रचारकार्यमद्यतनम् ।

**नन्दा**—नीले, किं पीडयस्येतौ हृदयमर्मच्छिदाऽऽलापेनैवम् ? ।

**नीला**—किमिव प्रोक्तं मयाऽत्र हृद्बाधकमेतयोः ? । किमनभीष्टमेतयोरन्योन्यप्रेम चक्षुषोर्मे ? । धर्मप्रसारधियैताभ्यां वृथा याप्यते यौवनमात्मीयमित्येव विषीदति मे मनः । सत्यं सकोपमेतयोरेतत्कृते मे हृदयम् ।

**नन्दा**—सुप्राप्यमेव सौख्यं वैवाहिकं सर्वेषाम् । परं धर्मसेवाभिलाषिणा यदि केनचिद् धर्महेतोर्व्ययीकृतं यौवनमात्मीयं तत् किं दोषास्पदमत्र ? । कथं मन्यतेऽत्र शमधनः ? ।

न किमपि प्रत्युक्तं शमधनेन । परं मृणालिन्याऽवाचि—" सम्यक् भाषितं मात्रा नन्दया " ।

**नीला**—परिचितैतेषां धर्मसेवा मे । न दूषयाम्यहमुभावेतौ । परं प्रत्यक्षीकृतबौद्धविहारसकलकार्याऽहं स्फुटं कथयामि यद् धर्मसेवाव्याजेन वनिताविहारवासनामात्मीयां पूरयन्त्येते विहारवासिनो भिक्षवः । किमिवान्यत् कुर्याद् युवयुवतीनां गणो रहो निरुद्धः ? । निरोधका एवात्र दूषणीयाः । एतयोरपि विचारिते चरिते किमन्यत् स्याद् गोचरं चक्षुषोः ? । करेण धर्मकार्यं कुर्वतोरप्येतयोः किमस्ति हृदये विना प्रेम्णा ? । कामं भवतु तत् शुद्धम् । परं न तदन्यत् किमपि प्रेम्णो यौवनसुलभात् । अपि च त्वामेव पृच्छाम्यहं किमर्थमुभावेवैतौ परस्परगृहीतपाणी सततं परिभ्रमतः ? । सदैवान्योन्यकीलितनेत्रावेतौ । बलादनशनमनुभावितस्य मानवस्य सर्वदा नेत्रे भक्ष्याभिमुखे एव । आश्रमवासी स जीर्णमन्युनामा भिक्षुस्तु स्फुटं दृश्यते

चण्डकामः। स्पर्शलोभान्मृणालिन्या बलादेव कुक्कुर इवान्तिकमसकृदुपसर्पति। न जाने पीडनयन्त्रपतितमिक्षुमिव कदैनं पाणिपञ्जरगतं नीरसीकरिष्यति शमधन इति। प्रेक्षमाणायामवलोकितायां विहारवासिनः सर्वे भिक्षवो विनीता अनघा धर्मात्मानश्च। कीटपिपीलिकादीनां क्षुद्रजन्तूनामपिचरणाघातनाशं न सहन्ते हृदयमेतेषाम्। परं को नु स्फुटं वर्णयेल्लीलायितमेतेषां परोक्षे भगवत्याः!। परितो भ्रमन्ति द्विला भिक्षवो युवतीमेकां सस्पृहं सर्वत्र। रजन्यां त्वेतेषां चेष्टितानां न शक्यं वर्णनं कस्यापि। जनैर्गर्ह्यमाणं नैव तद् विद्यते व्यसनं जगत्येतस्मिन् यदेभिर्धर्मप्रचारकैर्भिक्षुभिर्निशायां नाद्रियते। भवन्तु ज्वलनसात् धर्मप्रसारकास्ते विहारा बौद्धानाम।

श्रुत्वैममखिलं नीलालापमुपजातमन्युर्मृणालिनी शमधनमवोचत्—अक्षमाऽहं श्रोतुं गर्हणामेताम्। तदुत्तिष्ठ। याव स्वनिवासमावाम्।

परं शमधनोऽब्रवीत्—तथ्यमेव कथ्यतेऽनया। मयाऽप्यनेकशः श्राविता भगवत्यवलोकिता वृत्तान्तमेतम्। किन्तु नैवाद्रियते वचनमस्माकं भगवत्या।

अवलोकितापक्षपातिनीमात्मानं दिदर्शयिषुर्नन्दा कृतकं कोपमभिनयन्त्यवादीत्। "अविश्वसन्त्या तया यदि न ते वचनमाद्रियते तत् को दोषो भगवत्याः?"।

**नीला**—आत्मौपम्येन यत् परेषां दर्शनं प्रोक्तं पण्डितैस्तत् केवलं परपीडापरिहारैकहेतुकमेव वचनम्। धर्माधर्मविचारणायामप्यात्मौपम्यमेव स्वीकृतं न स्यात् संमतं मतिमतः। तिष्ठतु कथैतयोर्मृणालिनीशमधनयोः। परं तस्मिन् बुद्धविहारेऽकृतशास्त्रकथितविवाहसंस्काराः प्रकाममनुभवन्ति भिक्षवो युवानो गार्हस्थ्यसौख्यान्यभीष्टानि। कतिचिद् भिक्षाधनं मुषित्वा पृथक् संपदं संचिन्वन्ति। अन्ये वेषादि-

भिश्छद्मैरात्मीयैर्मोहयित्वा नगरकुमारीर्वञ्चयन्ति। भिक्षुयुवतीनामपि गणोऽत्रानन्यकर्मैव। यद्यहं राज्याधिकारिण्यभविष्यं तत् प्रथमं—

नन्दा—( सस्मितव् ) किमकरिष्यः ?।

नीला—किं पृच्छ्यते " किमकरिष्यः " इति ? शृणु—नाहं कस्यापि शीर्षमभेत्स्यम् किन्तु विहार एतेषां स्थाने स्थाने विवाह-वेदीरनेका अस्थापयिष्यम्।

इयन्तं कालं स्तम्भितजिह्वोऽपि नीलालापेनानेन मनाग् रञ्जित-मनाः शमधनः पप्रच्छ—" किमर्थम् ? "।

नीला—प्रथितं कार्यं विवाहवेद्याः। विवाहार्थमेवैता उपयुज्यन्ते। शमधन, यथा स्वीक्रियते भवद्भिः कुमारकुमारीणां गणो धर्मकार्याय तथा परिणीतानां वधूवराणामपि गणो न किं स्वीक्रियते ?।

बौद्धसंघाधिकारिण्यहमेव प्रश्नमिममुत्तरीकर्तुमर्हामीति मन्य-मानया मृणालिन्या मध्य एव प्रत्यवाचि—"स्वीक्रियते। कोऽत्र दोषः ?"

नीला—अभीष्टं तत्। तासु वेदिष्वहं, विना विवाहाद् विवाह-सौख्यमनुभवन्तीर्युवयुवतीर्विवाहं कारयिष्यामि। तेन हि प्रतिदिन-माचर्यमाणं पापं तावत् प्रशमिष्यति। कृतोद्वाहा अपि युवयुवतयो क्षमा एव धर्मप्रचारस्य। केवलं न ते " वयं ब्रह्मचारिणो धर्माचार्याः " इति स्फुटं कथयितुं पुरोऽन्येषां प्रभविष्यन्ति। अप्रबुद्धमतीनां भक्ति-भाजां भक्तिर्मनाग् लघुतां यास्यति। परं धर्ममिषेण प्रतिदिनमाचर्यमाणाः पापगिरयः क्षयिष्यन्ति।

नन्दा—( सपरिहासम् ) अपि तत्र पालयिष्यसि पृथगेकां वेदिं हेतोरेतयोः शमधनमृणालिन्योः ?।

नीला—आः एतयोः कृते तु प्रथमा वेदिः। स्नेहैकायतनं मदीयमिदं युगलं यदि वेदिसमुद्वाहमभिलषिष्यति तदियं नीला स्वह-

स्तेन तां वेदिं रचयिष्यति आनन्दाश्रुभिः सिक्तां तां केशैरात्मनो मार्जयिष्यति । प्रत्यहं धार्यमाणैरेतैः श्वेतकुसुमैः शिखरमेतस्या भूषयिष्यति। परं मातः, किमर्थं मया काननेऽस्मिन् करणीयः परिणय एतयोः? । गजान्ता संपदेनयोः सदने । प्रतिदिनं प्रतिपालयतो महाकुलसंभवौ गृहं प्रति निर्वतनमेतयोः पितरौ । गृहं प्रति निवृत्तयोरेतयोरानन्दन नगरगतानि देवतालयशिखराण्यखिलानि दीपितानि भविष्यन्ति । परिणयदिनमेतयोरुत्सवदिनं गणयिष्यन्ति निखिला नागराः । नर्तिष्यति मोदो मूर्तिमान् सर्वत्र । अपि च मातः, नान्यसदृशं कलङ्कितमेतयोः शीलम् । यन्मया कथितपूर्वं तद् अन्येषां विहारवासिनां चरितम् । बहवस्तेषां वर्तन्ते विहीना गृहैः । येषां गृहाणि वर्तन्ते तैर्निराहारैर्जीव्यते । ये कथमप्याहारं लभन्ते ते न कन्यकापितृभिराद्रियन्ते । यथैवं केचित् तत्र कुमारास्तथा कुमार्योऽपि । एष बौद्धविहारो नामैवंविधानां युवयुवतीनां सुखनिवासस्थलं विना मूल्यम् । मुण्डितमुण्डा; पीतवाससो न चिराद् भवन्त्येते धर्मोपदेशेऽधिकृता विनाऽऽयासम् । अहो मौर्ख्यमस्माकं नागराणाम् । यतो वेषवैचित्र्यमात्रविमोहिता एते मुण्डितमुण्डमेतं भिक्षुगणमुपदेशदानावतीर्णं धर्ममेव मूर्तं गणयन्ति । एवंविधानामेव युवयुवतीनां हेतोः स मे विवाहवेदिविरचनाशयः स्फुटीकृतो मया ते पुरः । सैव गृहिणी यथार्था या गृहकर्मनिरता कक्षास्थापितबालका बालानुरञ्जनपरा पाचयति पाकान् । तथैव स्वीकृतगार्हस्थ्यो यः शुचिरात्मश्रमोपजीवी सदाचारनिरतः परेषामुदाहरणतां याति स एव भवति भाजनं प्रेम्णो देवस्य । न स सत्यो भिक्षुर्यो भिक्षते । स एव भिक्षुर्यः पराङ्मुखो भिक्षायाः । परित्यज्य राज्यं भिक्षामङ्गीकुर्वन्नंशतः प्रशस्यो भगवान् बुद्धः । परं तथा कुर्वतानेन यत् कुपात्रकृतापि भिक्षा मान्यतां नीता तदनुचितमेव ।

सर्वमेतत् शृण्वती मृणालिनी पर्याकुलितचित्ताऽवर्तत । एतदालोक्य विषयान्तरचिकीर्षया नन्दयाऽभाणि—सर्वथा नैतस्मिन् बौद्धविहारे

संपत्स्येते परिणयमङ्गलं नः सख्युरेतस्य । यद्येतदत्र समपत्स्यत तन्नेत्रयुगलमस्माकममोदिष्यत । अस्तु । शमधन, यदा तत्संपत्स्यते ते नगरे तदा दास्यसि निमन्त्रणं नः स्मृतिपूर्वम् ? ।

एतदाकर्ण्य कपोलस्फुरितमन्दहासावुभावपि तावन्योन्यमुखमवलोकयांचक्रतुः । नीला प्रोवाच—मातः अद्यापि कार्यान्तरितः स समयः परिणयस्य ।

समापितधर्मप्रचारकार्यो दृश्यतेऽधुना शमधनः । परमद्याप्यपूरिताखिलमनोरथैवालक्ष्यते मृणालिनी । धर्मप्रचारकार्येऽङ्गीकृते शाक्तधर्मदूषणावेक्षणमद्याप्यवशिष्टमेतस्याः । नगरेऽस्मिन् करिष्यमाणे महति श्रीचक्रसमारंभे तदियमवलोकयिष्यति । ततः सर्वं यथादृष्टमवलोकितायै निवेदयिष्यति । ततो नगराधिपतिना महाराजेन धर्मान्तरं कारयिष्यति । एवं दर्शितविक्रमैषा काले परिणेष्यति ।

**नन्दा**—राज्यपदस्वामिनीयं नीला किं किं कुर्यादिति कथयितुमुद्यतया त्वया तत् परित्यज्य कथमियं मध्य एव महाराजस्य धर्मान्तरस्वीकरणवार्ता निवेद्यते नः ? ।

**नीला**—न मृषोद्यमिदम् । पृच्छतु भवती मृणालिनीमेवैनां येन स्फुटं ज्ञायेत ।

**मृणालिनी**—सत्यं सत्यमिदं वचनं नीलायाः । अद्य यावदाचरितं धर्मप्रसारकार्यं कथं स्याद् विफलमस्मदीयम् ? । तथाविध एव प्रभावः पाणेर्भगवत्या अस्माकमवलोकितायाः । असंशयमयं विजेष्यते न चिरात् । द्वित्रैर्दिनैः समापितयात्रोऽहमागमिष्यामीति कथयित्वा कुत्र संप्रति गतं मन्यन्ते महाराजं भवन्तः ? । स्वप्नावाप्तबुद्धदर्शनोऽसौ बुद्धोपदेशमनुसृत्य स्तूपदिदृक्षया बुद्धगयामस्ति गतः ।

असंमतात्मकत्थनः शमधनो मनागिव संक्रुद्धो मृणालिनीभाषितेन विषयं तं परिच्छेत्तुं पप्रच्छ—नीलाभगिनि, अपि सत्यैषा वार्ता या नगरे सर्वत्र बहुलीभूता ? ।

यथा किल यात्राप्रस्थितेन महाराजेनामात्यसात् कृतो बालोऽमात्यस्यैव सूनुरित्यन्ततः स्फुटीभूतमिति ? । आश्रममस्माकमुपानीय कृतं भवत्या पूर्वं कर्तव्यमात्मीयमस्माभिरपि च राज्ञश्चरणयोस्तं निधायानुष्ठितं कर्तव्यमस्मदीयम् । परं महाराजस्तममात्यसात् करिष्यति, स चामात्यस्यैवात्मजो भविष्यतीति कस्यासीत् स्वप्नेऽपि चेतसि समुत्पन्नम् ? । सर्वथा स्वन्ततां गतं भवदङ्गीकृतं कार्यमित्यभिनन्दितुं भवतीं यदृच्छयाऽत्रोपागतावावाम् । एतत्कृते चिरमपि समाचरितं भवत्या अभिनन्दनमपर्याप्तमेव स्यादिति तर्कयामः ।

**नीला**—सत्यमेतत् । परं नाहमेकाऽधिकारिणी कार्त्स्न्येनैतत् स्वीकर्तुमभिन्दनम् । आश्रमवासिनो यूयं भिक्षव एषा च वृद्धा, एतेऽप्यत्र संविभागिन एव । अतः सर्वेऽपि वयमेतत्संविभजामः । यतो मया स कुमारोऽपहृतः, भवद्भिश्चाश्रयदानेनानुगृहीतः,परं महाराजेनामात्यसात् कृतः स कुमारोऽमात्यस्यैवात्मज इति यदहममात्यं प्रत्याययितुं प्राभवं तत् केवलं चातुर्यादेव वृद्धाया एतस्याः ! ।

**मृणालिनीशमधनौ**—कथमिव ? ।

**नीला**—तदित्थम्—अपहृत्य मुरारिमहमिमं नन्दाया घोषोटजं प्रथममानैषम् । ततोऽनया नन्दया मया च स घोषोटजं प्रापितः । परं संभ्रमवशात्तदानीमुटज एवास्मिंस्त्रुटितसूत्रबन्धनो रक्षाकरण्डकः कण्ठान्मुरारेः पतितः । न स तमसि तदा मयाऽनया वा लक्षितः । ततश्च ....किमतःपरं वृत्तं मातः ? ।

**नन्दा**—आश्रमाद् युष्माकं प्रतिनिवृत्ताऽहमुद्घाटितद्वारा यावदुटजं प्रविशामि तावदेव केनापि शीतस्पर्शेन वस्तुना स्पृष्टं मे पदमित्य-

ज्ञासिषम् । कदाचिद् वृश्चिकः स्यादिति शंकितचित्ताऽहं दीपहस्ता जिघांसया समन्ततो वीक्षमाणाऽद्राक्षं करण्डकमेनम् । न मया प्रथममज्ञायि मुरारेः कण्ठपतितः स्यात् स इति । परमन्येद्युरुपागतयाऽनया नीलया स दृष्टमात्र एव विज्ञातः ।

**नीला**—बाह्याङ्गं केवलमस्यासीत् परिचितं मे । परं विदलिताद् विभागाद् यदाऽन्तर्गतं पदक्रमुपगतं दृष्टिपथं मे तदा मयाऽज्ञायि मुरारिरात्मजोऽमात्यस्येति । अथामात्यगृहं गते मुरारावनुपदं गताऽहं करण्डकेनैवामुना " तवैवायमात्मजः " इत्यमात्यं प्रत्याययितुं प्राभूवम्—

शमधनः प्रोवाच—सर्वमेव सत्यं कौतुकावहमत्र ।

**मृणालिनी**—सर्वथाऽनुगृहीतोऽयं भगवता बुद्धेन ।

अत्रान्तरे सकडकडाशब्दं व्यद्योतत विद्युत् । तेन संभ्रान्ताः सर्वे नभोदत्तदृष्टयः संलापाद् व्यरमन् । अथ झटित्येव समुत्थितः शमधनो मृणालिनीमवादीत्—उत्तिष्ठ मृणे, उपरि शिरसो दृश्यन्त आसारसमुद्यतास्तोयदाः । नांशतोऽप्यभूदक्षिगोचरमासारचिह्नं मध्याह्ने । अत एतदप्यन्यदाश्चर्यमेव । प्राक् प्रारंभाद् वृष्टेः स्वाश्रमनिवर्तनं श्रेयः ।

"सत्यमेतद्" इति सममेवोदीर्य "यातमधुना युवां पुनर्दर्शनाय" इति भाषमाणे नीलानन्दे उभौ तौ सानन्दं व्यसर्जयताम् ।

**— इति नवदशः परिच्छेदः —**

---

## -- त्रिंशः परिच्छेदः --

( कथं संपन्नं बलिदानम् ? )

रचिता सुमशय्या रुचिरा
ज्ञातं किन्तु न बहुवृश्चिककुलमुपविष्टं चान्तरा ।
पुरस्तात् स्वादु षड्रसान्नम्
ज्ञातं किन्तु न कणैरन्तरा विषस्य तत् पूर्णम् ।
किरीटः शिरसि मौलिरत्नम्
खड्गं वेत्ति न किन्तु निपतितं गले महातीक्ष्णम् ।
प्रणामं कुरुते जगदखिलम्
ज्ञातं किन्तु न शिरः कस्यचिल्लत्ताभिर्व्याकुलम् ।
कण्ठे कालपाशबद्धे
अमरं मत्वा वृथैव रमते विषयेऽसौ मुग्धे ॥ १ ॥

( रे. टिळक. )

प्रातिकूल्यादमात्यस्य महाबलिदानेन शाक्तधर्मोद्धरणे नैराश्यमुपगतोऽपि रुद्रभटोऽङ्गीकृतपूर्वं कार्यं न परित्यक्तुमियेष । अनेकविधा वर्तन्ते मार्गा धर्मोद्धरणस्य । नित्यात् कर्मणो बहुफलं नैमित्तिकं महाकर्म धर्मविधाविति मन्यमानेन तेन निखिलां निशामनुपजातनिद्रेण किं स्यात्तथाविधं महाकर्मेति चिन्ताविवशेनैवास्थीयत । निश्चितमन्ततस्तेन- " चिरमदृष्टश्रीचक्रसमारंभा नागराः । अतः स एव संप्रत्यनुष्ठातव्यः । तत्र हि शाक्तधर्मविशिष्टाः संगच्छन्ते पञ्च मकाराः सौकर्येण । सर्वेऽपि नरनारीगणाः शक्नुवन्ति समाचरितुं साहचर्येण । नैष्यति परिपान्थिता

महाराजः । स्वार्थादनभिमतमहाबलिदानोऽपि संमतमार्गान्तरसंश्रयणोऽमात्यवरः । अतः परित्यज्यौदास्यं भाव्यं मयाऽकालहीनं महाश्रीचक्रसमारंभसंभारसंग्रहतत्परेण " इति ।

अथाचिरादेव समाहूय सर्वानात्मनः शाक्तधर्मीयाननुयायिन आदिदेश रुद्रभटः—'यस्मिन् मुहूर्त आसीदस्माभिर्विनिश्चितपूर्वमनुष्ठानं महाबलिदानस्य तस्मिन्नेव सुदिने यथाऽनुष्ठीयेत महाश्रीचक्रसमारंभस्तथा यतितव्यं भवद्भिः सर्वैः ' इति । " महाबलिदानकल्पमेव फलं तन्त्रकथितं महाश्रीचक्रसमारंभस्य । एष एव पन्थाः प्रीणनस्यादिशक्तेरिति जानानाः सर्वेऽपि ते सहसैव संभारसंग्रहाय बद्धपरिकरा बभूवुः । शाक्तैककरणीयतयाऽस्य विधेर्नासीदयं पूर्वपरिषद्वदतितरां दुष्करः । अपि चैकीकृतानां पंचानामपि मकाराणां प्राप्तेः स भविता समय इति सर्वेऽपि सोत्साहमस्मै सर्वसंभारसिद्धीकरणमञ्जसा प्रतिशुश्रुवुः ।

पंचम एव मकारः प्रामुख्यमावहति समारंभेऽस्मिन् । आवश्यकी तत्र रूपयौवनवती तेजस्विनी । तस्या भ्रंशनमेव हि महते पुण्याय । क्वैतादृशी प्राप्येत कन्यकेति विवादव्यापृतेषु कश्चिद् दूरवर्ती शाक्तः सरभसमग्रतः संप्राप्योवाच—भो भो धर्मबांधवाः, अलमत्रविषये चिन्तया । अहमानयेयं तन्त्रकथितां शीलवतीं कुमारिकां समारंभाय नः । प्रागेव कपटजालनियन्त्रिताऽस्माभिर्बुद्धसंघवर्तिनी सा मृणालिनी कुमारिका कार्यकर्त्री । स्पृहयति सा दर्शनाय शाक्तधर्मसमाचरितानां सर्वेषामाचाराणां भीषणानाम् । प्रतिश्रुतं चास्माभिरेतस्यै दर्शनमेतेषाम् । सा च संप्रति शाक्तदर्शं पृच्छति सस्पृहं प्रतिदिनम् । कदा प्रभविष्यन्ति भवन्तः पूरयितुं प्रतिज्ञामात्मीयाम् ' इति । अतः श्रीचक्रसमारंभदर्शनायामन्त्रिता साऽसंशयमागमिष्यति । शाक्तमेलापकवर्तिनीं च तां सहसा समुध्दृत्य पूजामंचकस्थापनं सुकरं नः ।

परिचितपूर्वमेव शाक्ताचरितं कपटनाटकं वाचकानाम् । तन्नाटकनटैनैवैकेनाभाणि भाषितमेतदिति न भूयो निवेदनीयं वाचकेभ्यो धीमद्भ्यः ।

संमताऽभूदियं प्रयुक्तिः शाक्तानाम् । सुतरां तुतोष रुद्रभटः श्रवणेनैतस्याः । स उवाच—"हन्त शत्रुपक्षप्रधानभूतेयं यदि यास्यति साधनतामस्माकं समारंभे तदनायासेन द्विविधं संपत्स्यते कार्यं नः । एकं यथातन्त्रं देवतार्चनं, अन्यच्चाज्ञानभ्रष्टां तां गणयिष्यतां बौद्धभिक्षूणामपकारः । परं कथमद्वितीयैव सैष्यति समारंभमस्मदीयम्?" इति ।

**प्र० शाक्तः**—अलमनया चिन्तया । कदाचित् प्रसंगतो व्याजेन शाक्तधर्मनिन्दकानस्मान् विलोक्य समुत्पन्नविश्वासा साऽस्मासु दृढं विश्वसिति । अस्मदाचारविलोकने सुलभं स्यादात्मधर्मप्रचारकार्यं बुद्धानामिति मन्येत सा । विदितास्मद्धर्मदूषणाऽवलोकिता राज्ञे निवेद्य प्रभवेत्समुन्मूलयितुं न चिरात् धर्मं शाक्तानामिति मतं तस्याः । अतः कर्णपथमापतितायामेव श्रीचक्रसमारंभकिंवदन्त्यां तद्दर्शनसमुत्सुका साऽस्मत्कथितं व्याजवेषमास्थाय यस्मिन् कस्मिन्नपि वासरे समागन्तुमसहाया समुद्यता स्यात् । व्याजस्त्वयमस्माकं निगूहति सा सर्वदा सहचरादपि सख्युः । असहायपरिभ्रमणं हि मोदाय तस्याः । तथैव ससाहसस्तस्याः समुत्साहोऽपि । किं बहुना, विन्यस्य मयि मृणालिन्यानयनकार्यं निःशङ्कं सज्जीकुर्वन्तु भवन्तोऽन्यान् श्रीचक्रसंभारान् । यथाऽस्मद्रिपवस्ते बौद्धहतका यावज्जीवं न विस्मरिष्यन्ति वैरनिर्यातनविधिमस्माकं तथाऽद्य तानपकरिष्यामः ।

यदृच्छासंप्राप्तेनानेन लाभेन स्फुटमेव सर्वोऽपि संप्राप्तनवसमुत्साहोभूच्छाक्तगणः ।

यथानिश्चयं सिद्धीकृताः सर्वेऽपि श्रीचक्रसमारंभसंभाराः । प्रातरेवानीयन्ताद्य रक्तसुमनःस्रजो मद्यघटाश्चोत्सवभुवं शकटैः । महोत्सवहेतो-

देव्याः पुरः कारित आसीद् विशालः शोभमानो मण्डप एकः । सूर्योदयादारभ्यैवाद्य बहवः शाक्तनरनारीगणा गतप्रतिनिवर्तमाना अलक्ष्यन्त पुरतो मन्दिरस्य देव्याः । मध्याह्ने पुनः संगच्छमानानां जनानामसंख्यानां तथा संमर्दोऽभूद्यथोपरितनाद् विभागात् प्रक्षिप्तास्तण्डुलास्तिला अपि वा नभुवः स्पर्शमाप्तुं शेकुः । कांस्यताल–मृदंग–झंकारैर्भक्तजनगीयमानस्तोत्रशब्दैर्निनादिततयाऽस्य स्थलस्य कर्णनिहितमुखमाभाषमाणानामेव जनानां विचक्षूणामश्रूयन्त संलापाः । देवीप्रसाद इत्यहमहमिकया साग्रहं मिथो दीयमानानि मद्यभाजनानि, अनादानात् देवीकोपमुत्प्रेक्षमाणैर्भक्तगणैरनिच्छद्भिरपि सादरमसेव्यन्त । प्राक् केवलं गीतपरा नरनार्यः क्रमेण शनैः शनैर्नर्तनपरा अजायन्त । कदलीचतुष्टयविभूषितकोणं भव्यमेकं चतुष्कासनमलमकुरुत प्रोच्चैः सभागृहमध्यभागम् । मनोहररचनाविगुम्फितैर्लताकुसुमैः परितः परिवेष्टितैर्नयनहरतरतां पुपोषाद्य पूजयिष्यमाणाया आसनं कुमारिकायाः । का नु पुर आनेष्यते पूजनहेतोः कन्यका, कया वा पुण्यवत्याऽद्यतनी लप्स्यतेऽर्हणेति सर्वेऽपि पर्युत्सुकेन मनसा प्रतिपालनपरास्तस्थुः ।

\+ \+ \+

प्रागखिलादेतस्माद् व्यतिकरात् वस्त्रसंवेष्टितं किमपि पाणौ दधाना प्राप्तमतिभ्रमा भिक्षुयोषिदेका बौद्धनिवासाभिमुखं प्रस्थिता शमधनवसतिगृहं विवेश । मध्याह्ने विश्रान्तिमनुभवन्नेकाकी वर्तमानः शमधनो मनागिवावाप्तनिद्रोऽलक्ष्यत । तं तथा प्राप्तनिद्रमालोक्यैकाकिनं कर्णान्तिकमुपगतया नीलयोच्चैः करतालिकारवोऽक्रियत । तेन च द्रागेव मुक्तनिद्रः ससंभ्रममुत्थितस्तां क्षणमेकमीक्षमाणो नीलां प्रत्यभिज्ञाय प्रोवाच–अहो नीला संप्राप्ता । किमित्यस्यां वेलायमिहोपस्थीयते भवत्या ? ।

**नीला**–सर्वनाशवारणे प्रययितुम् ।

**शमधनः**–किमुच्यते ? । न मयाऽत्रगतोऽर्थः ।

**नीला**—कीदृशोऽर्थः ? । उपस्थितप्रायेऽतिभीषणेऽनर्थे कथमेवं विश्रम्यते भवद्भिः ? ।

**शमधनः**—अद्याप्यनवगतार्थ एवाहम् । कीदृशोऽनर्थः ? । को बाध्यते तेन । किं च मया कार्यं तद्विषये ? ।

**नीला**—न केवलोऽनर्थः परमतिमहाननर्थः । अन्विष्यतामादौ निभृतमात्मनः प्रिया मृणालिनी । ततः प्रष्टव्याऽहम् । एतदाकर्ण्य मृणामालिनीमेव व्यसनगतामुत्प्रेक्षमाणो झटिति समुत्थितः शमधनो नीलां तत्रैवोपवेश्यान्तर्गृहं प्रविष्टस्तत्र तत्र निपुणं निरूपयन्नपि क्वचिदनवेक्षमाणो निवृत्य मनागिव पर्याकुलितहृदयः प्रोवाच—सत्यमेव नीले, नात्र क्वचिदपि दृश्यते मृणालिनी । तद् ब्रूहि कुत्र वर्तते सा । किं प्रयाता सा गोचरतां कस्यापि व्यसनस्य ? ।

**नीला**—नाद्यापि कार्त्स्न्येन सा ग्रस्ता व्यसनेन । परं सह मया ससंभ्रममनागतेऽत्रभवति निःसंशयं सा ग्रस्येत ।

**शमधनः**—कृपया प्रोच्यतां सर्वं विस्पष्टम् । सज्जोऽहं यत्र कुत्राप्यागन्तुं सह भवत्या ।

**नीला**—तदेहि सर्वमेव मार्गे कथयिष्ये ।

उभावपि द्रुतपदं चलितुमारभेताम् । श्रीचक्रसमारंभस्थलमधिकृत्य प्रतिष्ठमानयोस्तयोर्नीला स्थूलस्थूलं निःश्वसन्ती वक्तुमुपचक्रमे—‘ असंशयं महाराज्ञीपदमर्हति ते प्रिया मृणालिनी । परमुभयोरपि युवयोः प्रातिकूल्याद् भागधेयस्य यौवन एव यस्तयाऽनुष्ठितो धर्मप्रसारदीक्षास्वीकरणाद्यः प्रमादस्तस्य फलमधुना परिणतप्रायम् । अस्ति नगरेऽद्य समारब्धः श्रीचक्रसमारंभः शाक्तहतकैः । तस्यापि स चाण्डालो रुद्रभट एव हेतुः । निपततु ज्वलने स समारंभः । तत्राहणायै मोहयित्वाऽस्ति नीता मृणालिन्यसहाया । ”

" कोऽत्र समारंभे संबंधो मृणालिन्याः ? " ।

" स्वयमेवात्मन्यङ्गारानाकर्षति जनो मन्दभाग्यः । परः केवलो निमित्ततां याति । शाक्तदुराचारदर्शनलालसामनवाप्तानुभवामेतामालोक्य मुग्धकन्यकां तद्दर्शनव्याजेन शाक्तकितवैर्निमन्त्रिता सा स्वयमेवास्त्यद्य तत्र गता । शाक्तगणपरिवृतां तां कुमारिकापूजनायाकृष्य ते पातकिनो न चिरात् कौमार्याद् भ्रंशयिष्यन्ति " ।

" कथं संभवति पूजाविधौ कौमार्यभ्रंशः ? " ।

" शाक्तधर्मविधाविदमज्ञानं भवदीयं सत्यमतितरां विस्मापयति माम् । परमकालोऽयं विस्मयस्य । पावित्र्यपरिरक्षणमेव ते कायस्य प्रियायाः प्रथमं कर्तव्यं संप्रत्यावयोः । तच्छीघ्रं विन्यस्यन्तां पदानि । परिवृता स्यादधुना वराकी सा हरिणी शाक्तवृकैरनेकैः । भवते मम च कृते सन्ति मया समानीतान्येतानि शाक्तवेषोचितानि वसनानि । अगृहीतशाक्तवेषयोर्हि दुष्कर आवयोरुत्सवगृहे प्रवेशः । प्रविष्टोत्सवगृहो भवान् प्रत्यक्षीकृतव्यवहारः स्वयमेव वेत्स्यति परस्तात् करणीयम् । भवदीयं प्रेम शौर्यं च भवन्तमुपदेक्ष्यति कथं तत्र प्रतिविधातव्यमिति । अशस्त्रस्यापि ते सिंहसदृशं बलमलं तेषां पातकिनां वारणायेति दृढं विश्वसिति मे हृदयम् " ।

एतदाकर्ण्यैव शमधनः शीघ्रपदं चचाल । नीलयाप्यनिलगत्याऽभावि ।

* * *

अधुना शाक्तसंसदि सभागृहे परां भुवमासीदुपगतं रामणीयकं श्रीचक्रसमारंभस्य । धर्मभक्तेर्मद्यमोहस्यैव वाऽऽधिक्यं व्यलसदखिलेषु संगतेष्विति न स्फुटमज्ञायत । निकषा पूजामंचकं सिंदूरचर्चितललाटा रक्तपुष्पमालाविभूषितकण्ठाः कतिपये शाक्तवरा वभूवुरुपविष्टास्तन्मध्ये पर्यन्तवर्तिनमालोकमीक्षमाणा मृणालिनी च । हास्यच्छटाच्छुरितमालोकयत

मुखमेतस्याः। अदृष्टपूर्वं भिक्षुजनविनिन्द्यमेव किमपि मया विपक्षगण-समाचरितमीक्ष्यते गूढं चक्षुषा स्फुटमिति मनाग् विजयकल्पनया विकसितानना सा तत्र साभिमानाऽप्यवर्तत। "तथा वर्णयिष्यामि श्वः पुरोऽवलोकितायाः शमधनस्य चात्र प्रत्यक्षीकृतं वृत्तान्तमेनं यथा तावुभावपि चिरं विस्मयस्तिमिततामेष्यतः। अथ स्वधर्मकार्यं सोत्साहमनुष्ठातुमुपदेक्ष्यत्यवलोकिता भगवती। मधुरैर्मनोहारिभिश्चैतस्या आलापैः स्थिरीभविष्यति ततो दोलायमानं मनो महाराजस्य। तेन च लब्धाधिकराजसाहाय्यो भूयो भविष्यति धर्मो बौद्धानाम्" एभिरन्यैश्चैतादृशैस्तत्कालोचितैर्मधुरैर्विचारैः पर्याकुलमभूत् तदानीं मानसं मृणालिन्याः।

अत्रान्तरे पुरस्तादुपगतो रुद्रभटः पूजामंचकमुपेत्य तं यथाविधि पर्यपूपुजत्। ऊर्ध्वं पूजाविधेर्मृणालिन्या अन्तिकोपविष्टान् शाक्तान् स समसूसुचत् हस्तसंकेतेन "संप्राप्तः समयः, समारोप्यतां पूजामंचके कन्यका समुद्दिष्टा" इति। अथ तेष्वेकः शाक्तो मृणालिनीश्रवणसंसक्तमुखस्तामवादीत्—"अपि प्रत्यक्षीकर्तुकामाऽत्रभवती निन्द्यान् नो धर्मविधीन्?। तत् पुरो गत्वा मंचकासनमारुह्यताम्। माऽऽत्मनो मनसि दीयतां स्थानं विकल्पाय" इति।

प्रेक्षकरूपेणोपस्थितां मां न कोऽपि कस्मिन्नपि कर्मणि योजयिष्यतीति मन्वाना सा शाक्तशब्दानेतानाकर्ण्याप्यनवगतार्था चिरं स्थिरैवासीत्। तदालोक्य तत्सहचरोऽन्यः शाक्तः प्रोवाच—किमेवं स्थीयते?। सर्वमत्रत्यं व्यतिकरं सम्यग् दर्शयितुमेवात्रभवती समानीतेहास्माभिः। ते च प्रकारा मंचकस्थितयैवात्रभवत्या सुखं दर्शनीयाः। तद् विनोदयतु भवती मंचकगताऽऽत्मानं दर्शनेन व्यतिकरस्य संपत्स्यमानस्य। मंचकमारोढुमुपदिशन्तः सर्वेऽप्यत्रभवतीमतितरां संमानमेव दर्शयन्ति। न किमवमानिता भवयुस्तेऽत्रभवत्या विकल्पदर्शनेन?। नान्यः कोऽपि शाक्तात् प्रवेश्यत इहास्माभिः। अतो यथा दर्शितस्तैर्विश्वासोऽत्रभवत्यां

तथाऽत्रभवत्याऽपि तेषु दर्शनीयः । यदि भवती विकल्पेत प्रातिकूल्यं वा दर्शयेत ततोऽस्माकमखिलमपीङ्गितमन्यैर्ज्ञायेत । अशाक्तदुष्प्रवेश्येऽत्र विहितो ऽयं प्रवेशो भवतीमपराधिनीं विधाय हेतुतामुपगतानस्मान् शासनास्पदतां नेष्यति । तन्नैवं विकल्प्यताम् । पुरो गत्वा सत्वरमर्चासनमलङ्क्रियताम् । शाक्तकृतमत्रभवत्या अर्चनमर्चनमेव । नैतद् दूषयेदशाक्तामप्यत्रभवतीम् " इति ।

एवमुक्ताऽपि स्वस्थानान्न चचाल मृणालिनी । तदालोक्य बलात्तामुभौ शाक्तौ भुजयोर्गृहीत्वा समाकर्षन्तौ पूजामंचकमुपवेशयामासतुः । साध्वसाक्रान्तहृदया मृणालिनी किंकर्तव्यमूढा मंचकासनं परित्यक्तुं यावदितस्ततः सर्पति तावदेवान्तिकस्थितौ पीवराङ्गौ द्वौ शाक्तौ तां सरोषं तत्रैव हठात् स्थैर्यं निन्यतुः । अथ शक्तिदेवीमधिकृत्य भक्त्या तारस्वरेण सर्वे तथा जगर्जुर्यथा भयाभिभूतमानसा मृणालिनी भ्रान्तेव सर्वतो वीक्षितुमारेभे । ततो रुद्रभटोऽभ्येत्य तस्याः कण्ठे समर्पितरक्तपुष्पमालः, चरणस्थापितगन्धकुसुमः, सिन्दूरचर्चितनिखिलभालः, अञ्जलिमितानि रक्तकुसुमानि तस्या अङ्गेषु प्राक्षिपत् । तदालोक्य देवीनामग्राहं प्रोच्चैर्जगर्ज भूयः शाक्तगणोऽखिलः । अनन्तरं रुद्रभटो मद्यकुम्भादेकस्माद् रौप्यचषकमेकमापूर्य तं मृणालिनीं पाययितुं तस्या आननान्तिके कृतवान् । तदानीं तु सावेगमात्मनोऽङ्गानि चालयन्त्या तया स्वाननार्पितः स चषकः पाणिना बलाद् दूरीकृतः ।

तद् दृष्ट्वा मंचकमारोढुं तां पूर्वमनुनयन् शाक्त उत्थायोवाच—"मा तावत् । नैवं प्रतिकृतं सह्यतास्माभिः । शाक्तदुराचारदिदृक्षां निवारयितुमपारयन्तीयमङ्गनाऽस्माभिरिह समानीता । तत् कथमधुनैवं प्रतिक्रियेत ? । कथमस्माभिरस्मद्धर्मावमानः सह्येत ? । नैष विहारो बौद्धानाम् । न वा राजाश्रयमदोद्धतानां बौद्धधर्मप्रसारव्याजेन पर्यटतां भिक्षूणां स्वेच्छाचारानुकूलश्चतुष्पथः । अस्मदीयोऽयमुत्सवमण्डपः । अत्रागच्छता

जनेनास्माकं धर्मो माननीय एव "। एतावदाभाष्य स रुद्रभटं जगाद– " किं विशङ्क्यते ?। अलं विलंबेन। पाययतु भवान् कोमलाङ्गीमेनां कन्यकां द्राक् मद्यप्रसादम्। उत्सुकाः सर्वे वयं यथाविधि समापयितुं श्रीचक्रसमारंभमेनम् " इति।

नायं शाक्तोपदेशोऽभूदावश्यको रुद्रभटस्य। सर्वेष्वपि शाक्तेष्वगृहीतमद्यः स एवैकोऽप्रमत्तोऽवर्तत। मृणालिनीलावण्यहृत-हृदयतयैव तन्मुखं सस्पृहमीक्षमाणस्य तस्य पाणिः क्षणमचलोऽतिष्ठत्। तन्मुखादनाकृष्टदृष्टिरेव स भूयो मद्यपात्रं तस्या आननान्तिकं निनाय तां चानुद्घाटितमुखीमालोक्य तत्कपोलनिहितवामहस्तोऽङ्गुलिना तदोष्ठपुटमुद्घाटयितुमारेभे। आघ्रातमद्यगंधैव मृणालिनी बलादावलित-वती वदनमात्मनः। परमस्वतन्त्रतामुपगतं पाणियुगलमात्मनो विज्ञाया-शरणा सा करुणमुच्चैश्चक्रन्द।

श्रुतिपथमुपगत एव क्रन्दिते मृणालिन्याः प्रेक्षकगणे शाक्तवेषा नीला शमधनश्च सहसा समुत्तस्थौ। नीला निषेधयन्ती तारस्वरेणोवाच– " संहर हस्तमात्मनश्चाण्डाल। पश्यायमत्र तिष्ठति ते मृत्युः। मामेयं दूष्यतामबला स्पर्शेनात्मनः " इति। शमधनोऽप्युच्चैरुज्जगार ' अलमलं भयेन मृणालिनि। एषोऽहं द्रुतपदमागत एव परिरक्षितुं त्वाम् ' इति। एतावदाभाष्योभावपि तावगणितमार्गस्थितजनगणं कथमपि सर्वान् समु-ल्लङ्घ्याकालहीनं मंचकान्तिकमुपजग्मतुः। अथ ग्रहणयन्त्रेणेव लोह-निर्मितेन पाणिना वामेन दृढं कण्ठे गृहीत्वा रुद्रभटं, दक्षिणपाणिमुष्टिं प्रेक्षकान् दर्शयन्नुदघोषयत्–" य इहागमिष्यति पुरः स प्रथमं पञ्चत्वं यास्यति " इति।

नीलाऽपि निजवस्त्रनिह्नुतं प्रस्फुरत्तीक्ष्णधारमसिमाकृष्य सर्वेषां पुरो विधूनयन्त्युवाच–" शाक्ताधमाः, स्वासनस्थिता एव जीविष्यथ। उज्झितस्थानास्तु मरिष्यथ " इति। शमधनेनात्मनः पाणिना तथा दृढं

निगृहीतो गलो रुद्रभटस्य यथा स निरुद्धश्वासः सोद्वेगमात्मनो हस्तपादं प्रकम्पयितुमारेभे । तदालोक्य नीलयाऽभाणि—" शमधन, मनाक् शिथिलयतु भवान् अधमस्यास्य गलग्रहं स्वीयम् । नानेन निरुद्धश्वासेन भवत्पाणेरासादयितव्यं मरणम् । मत्पाणिरेव यापयत्वेनं पञ्चताम् । भवद्धस्तहतेऽस्मिन् कथमिव मयाऽपाक्रियेत ? । प्रेतव्यापारितशास्त्राहं न विन्देयमानन्दमभीष्टम् । तदेषोऽसिरमप्रविश्यास्य हृदयं पास्यति प्रकामं प्राणजलमेतस्य " । एतावदाभाष्य पार्श्वयोः सत्रासं चेष्टमानस्य रुद्रभटस्य हृदयेऽसिनानया तथा प्रहृतं क्रमेण यथा न चिरात् सावेगं बहिरुद्गच्छन्तीभी रुधिरधाराभिस्त्रयोऽपि ते रुधिरक्लिन्नवाससो बभूवुः । रुद्रभटश्च शब्दमात्रमपि वक्तुमपारयंश्छिन्नमूलो द्रुम इव सहसा भूमौ पपात ।

अथ तद्धृदयसमर्पितपदस्तिष्ठन् शमधनो भीषणामात्मीयां दृशं तथा न्यक्षिपत् प्रेक्षकेषु यथा न कोऽपि तेषु स्वासनं परित्यक्तुमुदसहत । यतः पार्श्वस्थिताः पुरो धावितुं यतमानाः केचिच्छाक्तास्तेन लीलयैवासन् पश्यतां सर्वेषां दूरमुत्सारिताः । नीलाऽपि च रक्ताक्तं तं द्योतमानमात्मीयमसिं दिक्षु चतसृषु भ्रामयन्ती प्रोवाच—" नूनमधुनाऽवसितो नरमेधः । अनेन दुरात्मना नराधमेन पूर्वमेवमेव श्रीचक्रसमारंभमेकं कारयता पूतो मे देहो दूषितः । तेन दुःखेन भ्रष्टमतिरहमियतो दिवसानपरिचिकीर्षुरवसरप्रतिपालनपरा पर्यभ्रमम् । लब्धोऽन्ततः स समयः । प्रयातं पूर्णतां पापमस्य पाप्मनः । प्रक्षिप्यतां दहने स वः शाक्तधर्मः । देवीपूजनं निमित्तीकृत्य पीतमद्या भवन्तः पशुतां यान्ति । तथैव पूजामिषेण युष्मदीयाः केचित् कामुका एवंविधा निरागस्काः कन्यका विधाय पीतमद्या बलाद् रमन्ते सह ताभिः । एतादृशान् भवतां सर्वानपि दुराचारान् सहमाना सा वो देवी निःसंशयमधमाधमा राक्षस्येव । अथवा किं देव्या गर्हणेन । न किमपि स्वयमनुतिष्ठति वराकी सा । यूयमेव भक्ततामाश्रित्य देव्या अर्चनमिषेण दुष्टात्मानः

कामान् पूरयथ। धिगेतादृशान् पापकृत्तमान् वः शाक्तान्। एवमहर्निशं दुराचारनिरतानां भवतां शाक्तानां कृते कीदृशो नु भवेन्निरयो महानिरयो वा निर्मितो विधात्रा परलोके। अथवा किमनया मे भवतां निरयविचारणया। यान्तु भवन्तः स्वेन कर्मणा निरयं महानिरयं वा। न मे प्रयोजनं शाक्तानां गणेन धर्मेण वा। अवसितं चिरसंकल्पितं वैरसाधनं मे। संप्रति स्वतन्त्राऽहं कात्स्न्र्येन पितृवेन ज्वलन्त वैश्वानरं तर्पयितुमनेन मे देहेन। एहि शमधन। अवसितं कार्यमस्माकम्" इति।

मनःसंतापपूरितहृदयतया चक्षुर्भ्यां ज्वलतः स्फुलिंगान् बहिः प्रक्षिपन् शमधन एतावदेव प्रोक्तवान्—"बौद्धसंघं प्रविशता मया सशपथमङ्गीकृतमद्यभग्नमहिंसाव्रतं मामकीनम्। तथैवैतस्याः कन्यकाया, प्रेम्णा योऽयं मयाऽभूदूरीकृतो विहारवासः प्राक् सोऽप्यस्मात् क्षणात् प्रभृत्येव परित्यक्तः"। इत्युक्त्वा क्रन्दनक्षण एव गतचेतनां तां मृणालिनीं स्कन्धेनादाय वज्रसदृशमात्मनो मुष्टिमखिलान् दर्शयन् निर्भीक एव सभागृहान्निरगात्। नीलाऽपि रक्ताञ्चितं तमात्मनोऽसिं धूनयन्ती शमधनपदप्रतिमार्पितपदा तमनुससार।

सभागृहमलंकुर्वाणाः सर्वेऽपि सभ्याः प्रायेण वारुणीमदनष्टचेतना अभूवन्। चिराभ्यस्तमद्यपानत्वाद् येऽप्यप्राप्तमोहा अभूवंस्तेऽपि भीषणं तं व्यतिकरं वीक्ष्य साध्वससमाविष्टमनसो हृतजिह्वा इव निःशब्दाः स्वस्थान एव तूष्णीं तस्थुः। नैकोऽप्येतेषु हस्तं पादं वा स्वीयं चालयितुमियेष।

\+ \+ \+

मुक्तसभावुभावपि तौ नीलाशमधनौ विना विश्रामं द्रुतपदं गच्छन्तौ न चिराद् बौद्धविहारभुवं प्रापतुः। माध्याह्निकीं विश्रान्तिमासेव्य स्वासनोपविष्टा भगवत्यवलोकिता तत्र ग्रन्थवाचननिरताऽवर्तत। सद्यः प्राप्तजन्मानं हरिणशावकमिव दूरीभूतचेतनं तं मृणालिनीकाय-

मात्मनः स्कन्धादवतार्यावलोकितायाः पुरो निधाय शमधनो विनम्रमुखो बद्धाञ्जलिरतिष्ठत् । तदालोक्य विस्मयास्तिमितमुखी किमप्यजानाना सा तमवादीत् ' किमेतत् ' इति ।

" धर्मप्रसारकार्योत्साहातिरेकस्य फलमेतत् परिणतम् " इति ताभ्यामुभाभ्यामपि सममेव प्रत्यभाणि ।

एवं कथितेऽप्यज्ञातवृत्तान्तां तां विज्ञाय शमधनो बभाषे—"अप्रमत्तया करणीयं प्रचारकार्यं नगर्यामेतस्याम्, नैकाकिन्या पर्यटितव्यम्, नैतेषु विश्वसितव्यम्, नैभी रहो मन्त्रयितव्यम्, नैतद्दोषाणामन्वेषणाय प्रयतितव्यम्, सर्वमप्युपदेशकार्यमृजुनैव मार्गेण सर्वदा विधातव्यम्" इत्यनेकशो मया प्रबोधितयाऽप्येतयाऽनुज्झितनिजक्रमयैवास्थायि । अन्ते चाद्य श्रीचक्रसमारंभदर्शनव्याजेन मुग्धमतिरेषा विप्रतार्य शाक्तैः सभागृमनीयत । तत्र पीतमदिरामेनां विधाय कौमार्यमस्या बलाद्धर्तुकामानां तेषां शाक्तानां कूटसंकल्पा भाग्यात् परोपकारनिरतया काल एव कर्णे मे सर्वमपि वृत्तं कुर्वाणयाऽनया नीलया मोघीकृताः । समये संप्राप्य तत् सभागृहं शाक्तानामाभ्यामद्य परिरक्षितेयमनुचितान्मर्यादातिक्रमात्तेषाम् । हतः स नराधमः शाक्तधर्मगुरू रुद्रभटः " इति ।

दूरीभूतसंकटां विज्ञाय मृणालिनीमवलोकिता तुतोष । परमस्मिन् कर्मणि विहितो वधो न रुरुच एतस्यै । शमधनेन नाम स्वाश्रमवासिनैकेन बौद्धेनैव समनुष्ठितोऽयं वध इति मन्यमानया तयाऽभाणि—' शमधन, अपि भग्नमहिंसाव्रतमात्मीयं भवता ? । अपि वितथीकृता दीक्षासमयस्वीकृता सा प्रतिज्ञाऽऽत्मनः ? ' ।

एतदाकर्ण्य हास्यमात्मनो निरोद्धुमक्षमा नीला चिरमुच्चैर्विहसन्ती प्रत्युवाच—मैवम् । अलमत्रविषये चिन्तया भगवति । नायं भगवत्याः सच्छिष्योऽनुष्ठितवांस्तदेनः । मयाऽऽत्मपाणिना हतो रुद्रभटः । कृतं

मया न्याय्यं वैरनिर्यातनम्। न मे धर्मः प्रतिबध्नाति मां वधकर्मण्येतस्य। अहं हि शाक्तधर्मसंभवाऽद्यापि शाक्तैव। परं यद्यपि नीलाऽद्य तं नाहनिष्यत् तथापि शमधनस्य पाणिरेव निःशङ्कं पञ्चतामापयिष्यत् भवत्वेतत्। परमहिंसामौढ्यमिदं वः सत्यं हासयति माम्। यथा ते शाक्तास्तथैव यूयं बौद्धाः। उभावप्यतितरां मूर्खौ बुद्धिहीनौ। अनधिकारिण्यहमेवं भाषितुम्। परं नाहं क्षमा निरोध्दुं वाक्यमेतद् यदतिक्रान्तमर्यादमिदं युष्माकमप्यहिंसाव्रतं समाचर्यमाणम्। दुष्टानां हिंसनमेव यथार्थो धर्मः। निरागस्का अशरणा अबला बलाद् दूषयतः खलानहत्वा नैव वर्तिष्यते जगदेतत्। यदि धर्ममूढा दुराचारनिरतास्त शाक्तास्तथा धर्मं विडम्बयन्ति तद् यूयमपि बौद्धा अहिंसानुधावनातिरेकेणैवं मौढ्यमाश्रयध्वे। सर्वथोभावपि मूर्खावेव। परं किं मे कार्यं भवतां धर्मेण। अवसितमायुःकर्तव्यं मे। अधुनाऽन्ततो भगवत्याश्चरणयोरेषैव प्रार्थना मे—मोचयत्वस्मिन्नेव क्षणे भगवती मृणालिनीशमधनावुभावपि दीक्षाप्रतिज्ञाया बौद्धानाम्। परस्परानुरक्तावेतौ संसारसुखलिप्सयैव भवदीयं संघं संप्रविष्टौ स्तः। मनोगतां वाञ्छामात्मनो निरुध्य यदनयाऽनुष्ठीयते धर्मप्रचारकार्यं तत्र केवलमस्या महामनस्कता भावनावशता वा हेतुः। भवत्सदृश्या धीमत्या वयोवृद्धया दृष्टसर्वलोकसंव्यवहारयाऽङ्गनया प्रागेव स्याद् ज्ञातव्योऽयमर्थः। परं ध्येयवादिनी भगवती परानर्थदर्शने नेत्रविकलैव। धिग् भवतीं यैवं समानीय युवयुवतिगणं विहारे धर्मप्रचाराढ्यां शिशुलीलामिमां वार्धक्येऽप्यातनोति। परित्यज्य लौकिकानाचारानेवमसमय एव युवयुवतिषु यतिधर्मं सिसृक्षोस्त उपहाससंप्राप्तिस्त्वासीत् कदाचिदपरिहार्यैव। साधु संपन्नमिदं यत् कालान्तरिता साऽद्यैवानेन व्यतिकरेणैवमनुभूतिमुपगता ते। विहारे प्रत्यहमुत्तरोत्तरं गूढपापमाचरद्भिर्भिक्षुभिर्भवत्यैवमध्यापयितव्याः पौरा धर्ममिति विपरीतेयं रीतिर्न जाने किमभिधानमर्हतीति। यदि मे मतं संमतं ते तदेवमनुष्ठातुमर्हति

भवती–उच्छिद्यतामयं बौद्धसंघः । अथवा प्रार्थनापीठेष्वेतेषु परिणयवेदीः स्थापयित्वा यथाऽऽश्रमस्था युवानो युवतयश्च प्रकाशं परिणीय परिपूरितमनोरथा भविष्यन्ति तथा तावद् विधीयताम् । प्रकाशं स्वीकृतगार्हस्थ्या एते पर्यटन्तु धर्मप्रचारायाभीष्टाय यदि निर्बंधस्ते । त्वादृश्या निष्कलंकयाङ्गीकृता धर्मप्रचारदीक्षा नातितरां खेदयेद् हृदयानि सचेतसाम् । भगवत्याऽपि पूर्वे वयसि समुपभुज्य सुखानि सांसारिकाणि तुष्टिमुपगते, कारणेन वा केनचिद् विषयसुखविमुखे कार्त्स्न्येन मनसि न किमियं स्वीकृता दीक्षा धर्मप्रचारस्य ? । अंशतोऽपि तावदात्महृदयानुमानेनान्यहृदयं ज्ञेयं जनेन । स्वयं क्षमो धर्मः परिरक्षितुमात्मानम् । स्वभावविकासमनुसृत्यैव कृतानि कार्याणि परमेश्वरं प्रीणयेयुः । परानुपदिदिक्षुणा येन केनापि जनेन स्वयं सदाचारनिरतेनामुक्तजनसंगेन स्वात्मैवान्येषामुदाहरणतां नेयः। प्रस्तरचयनिरोधितोऽपि न विरमति प्रवाहो नद्याः । स सेतुं भिन्द्यात् समाश्रितमार्गान्तरो वा स्वकार्यमेव प्रकुर्यात् । किमिव लब्धं सदारसुतं राज्यपदमात्मीयं परित्यजता तेन वो वृद्धगुरुणा ? । अनायाससंप्राप्तमासीद्धस्तगतं राज्यपदं तस्य । अपरित्यक्तराज्य एव स सुखलब्धमधिकारं यदि विनाशायासतामुन्नमनाय च सतामुपायोक्ष्यत् तदसंशयमतितरां जनानुपाकरिष्यत् । भवतु । क्षमतां भगवती यदहमेवं स्फुटमवोचम् । परमेतावतो दिवसान् सत्यं संघचरितमीक्षमाणाऽप्यहमद्य मृणालिनीव्यतिकरममुं प्रत्यक्षीकृत्य न नियन्तुं प्राभूवं वाचमात्मीयाम् । अत एवैतानि निरगमन् वाक्यान्याननान्मे । भवत्यां पुनरतितरां सादरं मे हृदयमित्यन्त्योऽयं प्रणामः पदयोर्भगवत्याः " ।

इत्युक्त्वा पुरो गता नीला " एहि भ्रातः " इति शमधनं सप्रणयमन्तिकमाहूयावनौ निश्चलं निपतिताया मृणालिन्याः करं तत्करे कृत्वा " प्रेम्णा गार्हस्थ्यसुखं सुचिरमनुभवन्तौ युवामनाथामिमामात्मनो धर्मभगिनीं स्मृतिपथे स्थापयतम् " इत्यभिदधाना परिचुम्बितमृणालिनी-

कपोलाऽश्रुभिरभिषिच्य तां प्लवनमध्यैव गत्या ततः स्थानात् सरभसं निरगात् ।

एवं पुरः प्रवर्तमाने व्यतिकरे तूष्णीमेवासीद् भगवत्यवलोकिता । न शब्दमात्रमपि वाक्यं निरगमदाननादेतस्याः । प्रतिवाक्यं हृदयमर्म स्पृशन्नीलोपदेशः क्रमेण तद्धृदये स्थिरीभवितुमारभत । गतायां नीलायामवलोकिता मृणालिनीं स्वाङ्के स्थापयित्वा वारिणा शिरसि नयनयोराननेच सिञ्चन्ती तां प्रत्यागतचेतनामकार्षीत् । प्रकृतिमापन्ना मृणालिनी "मुक्तश्रीचक्रसमारंभस्थलाऽहं बौद्धाश्रम एवावलोकिताङ्के शये" इत्यालोक्य सुतरां व्यस्मयत । अथ समुत्थाय गच्छन्तीं तामन्तिके समुपवेश्य शमधनं चाहूयोभयोरपि पृष्ठयोः प्रेम्णा स्पृशन्ती नभोदत्तदृष्टिरवलोकिताऽवादीत्–"वत्सौ, यस्य कस्याप्याननेनेश्वरः श्रावयति संदेशमात्मनः । मन्मनःपूतत्वान्मयाऽनुस्रियमाणोऽयं मार्गो यद्यपि न मां दोषपक्षे स्थापयति तथापि सत्यभूयिष्ठाऽभूद् वाग् भ्रष्टमतिकायास्तस्या योषित इति विश्वसिति हृदयं मे । अथवा काऽहं तां भ्रष्टमतिकामभिधातुम् ? । अस्तु । इतो गच्छन्त्या तया युवयोरुभयोरेकत्र ग्रथिताविमौ करौ नाहं पुनर्वियुयुक्षुः । न युवामप्येतौ वियोजयतम् । आश्रमप्रवेश एवासीत् पृष्टं मया प्रथमं "अपि दम्पती युवाम् ?" इति । तदाऽवनमितवदनाभ्यां युवाभ्यां ह्रियैवाविष्कृतः प्रेमा हृद्गतः । तदधुना स्वपुरं प्रतिनिवृत्तौ युवां परिणीयानुभवतं दाम्पत्यसुखं सुचिरम् । अद्य यावत् साधु समाचरितं युवाभ्यां धर्मप्रचारकार्यमस्मदीयम् , प्रतिपाल्य सम्यग् दीक्षाप्रतिज्ञामात्मीयां न मनागप्याज्ञाभङ्गसंजनितेनैनसाऽऽत्मा स्वीयो दूषितः । अत ऊर्ध्वमपि भवत्कृताया भूयस्याः स्वीकरणं सेवाया न स्यादुचितमस्य नः संघस्य" ।

एतावदाभाष्याश्रुप्लुतास्याऽवलोकिताऽन्तर्गृहं प्रविवेश । अथ प्रेमावेशमात्मनो नियन्तुमक्षमा मृणालिनी परिष्वज्य शमधनमानन-

मात्मीयं समानीय कर्णान्तिकं शमधनमवादीत्—"शमधन, समये सत्वरं साहाय्याय संप्राप्तो भवानित्येव नाहं विडम्बनामद्यान्वभूवम् । यद्यहं तामन्वभविष्यं तदसंशयमामृत्योर्दुःखभाग् भ्रष्टमतिका चाभविष्यम् । द्राक् समापनमायुषः परित्यज्य च न किमप्यन्यन्मे शरणमभविष्यत्" इति ।

शमधनोऽपि सीव्यन्निवाङ्गान्यङ्गैरात्मनस्तां दृढमापीड्य भुजाभ्यामाबभाषे—"कथमिव, मृणे, तथा घटयितुं प्रवर्तेतेश्वरः? । ईश्वराहितभारोऽहमनन्यमना इयतो दिवसानत्र वसन्नद्य तेनैव कृतार्थतामस्मि नीतः । सत्यं सुतरामुपकृतं भगवत्याऽवलोकितया यस्याः सन्निधावहमियत् तपस्तप्तुं प्राभवम् । केवलमेतदेव कथनीयं मया यन्नेदं वैराग्यप्रभवमासीन्मे तपः परं प्रेमप्रभवमेवेति" इति ।

— इति विंशः परिच्छेदः —

## — एकविंशः परिच्छेदः —

### ( नीलाया आत्मार्पणम् )

शाक्तधर्मनिरतः पृथुलाङ्गः
पाणिपादसहितो नररूपः ।
अम्ब, भैरवपुरे महिषोऽद्य
कालिकाबलिकृते निहतोऽत्र ॥१॥

बौद्धविहारविनिर्गता नीला क्वचिदप्यनिरुद्धगतिर्नन्दाघोषान्तिकमेत्य विरराम । विहारं प्रति गच्छन्त्या तयाऽध्वन्येव, 'निष्प्रयोजनोऽयमधुना कृपाणः करकलितः' इति चिन्तयन्त्या शोणितारुणितः स पल्वलजले कुत्रचित् प्राक्षेपि । परं परिधानवसननिपतिताः परित्यक्तार्द्रभावा रुधिरबिन्दवोऽविरला वसनेऽस्याः स्फुटमभूवन्नयनगोचरा जनानां प्रेक्षकाणाम् । अदृष्टपूर्वया कान्त्या प्रशान्त्या च द्योतितमभादद्य सानन्दमाननमेतस्याः ।

असमये समुपस्थितामद्य नीलामालोक्य मनाग् विस्मिताऽपि नन्दा गृहकर्मव्यापृतमना न सुतरामागमनेऽस्या आदृताऽभूत् । नीलाऽप्यनालपन्ती प्रविश्य पर्णकुटीं भूमावेव देवताभिमुखं प्रसार्याङ्गान्युपधानीकृतपाणिः सुष्वाप । अचिरादेव निमीलितनयनया घर्घरायमाणयाऽनया प्राप्तगाढनिद्रानन्दयाऽभावि ।

अल्पेनैव कालेन स्वोटजं प्रविष्टा नन्दा स्वापसुखं सेवमानां नीलामालोक्य निद्राभङ्गभयान्निवृत्त्य बहिर्गताऽवसितसकलकार्यजाता

यथानित्यमङ्गणवर्ति काष्ठासनं स्वीयमध्यासांचक्रे। अचिरेणैव मुक्तनिद्रां नीलां विज्ञाय तारस्वरेण तां नामग्राहमाजुहाव। श्रुतनन्दाह्वाना नीलाऽपि निर्गत्य बहिरागता नन्दान्तिक एव स्वासन उपविवेश। अथ नन्दा नीलामप्राक्षीत्—"प्रतिदिनमासायाहं बहिरेव पर्यटन्ती त्वमद्य कथमेवमाशुतरमुपगताऽसि ?। के के जना विलोकिता अद्य ?"।

नीला जगाद—पूर्णतां गतमद्य मे दर्शनकार्यम्। न कोऽपि जगतीह संप्रत्यवशिष्टो यस्य दर्शने स्पृहावतीयं नीला। अत एवाकाले प्राप्ताऽहमद्य घोषमिमम्। सायं स्वकुलायं प्रतिनिवर्तमानाः पक्षिणः प्रातः पुनर्विहरणं निर्गमनं चिन्तयन्त एव स्वापसुखं संसेवन्ते। न तथाविधं निवर्तनं मे। दर्शनं भैरवपुरस्यास्य जनानां चात्रत्यानामन्त्यमनुभूयैवास्मि संप्रति संप्राप्तेह।

शोणितबिन्दुदूषितं विलोक्य वसनं नीलाया शङ्कितहृदयया नन्दयाऽभाणि—कुत एते रक्तवर्णास्तत इतो दृश्यन्तेऽङ्का वसने ते ?। किं केनचित् प्रक्षिप्तः सिन्दूरः शरीरे ?।

**नीला**—कः क्षेप्स्यति सिन्दूरं शरीरे मे ?। कथमहं सहिष्ये तथा करणम् ?। एते रक्ताङ्का नाम धर्मनिष्ठाया मे सत्यं साक्षिण एव।

**नन्दा**—कथमिव ?

**नीला**—अयि किं विस्मृता भवती यदहं शाक्तकुलसमुत्पन्नाऽस्म्यङ्गनेकेति ?। न किं मया प्रापणीयो मोक्षो बलिदानेन पुरो देव्याः ?।

**नन्दा**—तत् को नु हतस्त्वं पशुर्बलिदानाय ?। अन्यदा हि बलिदानशब्दोऽपि श्रुतिपथमापतितो नाभूत् ते सह्यः ?।

**नीला**—ननु सत्यं तत्। परं तथाऽद्य दिव्यं बलिदानसाधनं हस्ताभ्यासमुपनतं मे यथा महानपि चिरवर्धितो बलिदानविद्वेषो द्रुतं

निरगमन्मे मनसः कार्त्स्न्येन । कथमित्राशरणं कमप्यबलं पशुं समभ्य तुष्येन्मे हृदयम् ? । अतः सुमहान् हतो मया नररूपधरोऽद्य महिषः । सुविदितसकलशाक्तधर्मतत्त्वतया स धर्मगुरुरेव शाक्तानामिति गृहीतेऽपि त्वया न भवेदयथार्थम्। मुरारिः पुनरल्पवया अज्ञो बालः। कथमेष्यति देवी तोषमस्याल्पैः पललैः ?। यथेयं देवी महिष्ठा तथैव न किमस्याः क्षुधाऽपि महिष्ठैव ?।

एभिरन्यैश्चैतादृशैर्वचोभिर्नीलाया आशयं मनागिव जानाना नन्दा निजगाद—सर्वथा चिरकाङ्क्षितं कृतमेव त्वया वैरनिर्यातनमन्ततः । अहो धार्ष्ट्यं ते !। प्रथमं प्रविश्योटजमन्यद् वसनं निवस्यागच्छ। जहीहि शोणितबिन्दुदूषितमेतदादावमंगलं वसनं ते ।

" अहो चातुर्यं ते ! । किमेतद् वसनममङ्गलं गणयसि ?। नास्त्यन्यद् मङ्गलतरमेतस्माद् । रुधिरं स्वयममङ्गलमपि वैरनिर्यातनकर्मणि रिपुहृदयनिर्गतं तत् केवलं मङ्गलायते। अहं तु नैतदपनिनीषामि वसनमिदमामृत्योः शरीरान्मे। किमेतदपूततरं मन्यसे भ्रष्टादेतस्माच्छरीरान्मे ?।

**नन्दा**–( सविस्मयम् ) किमुच्यते। किमेतदेव वसनं सकलेऽप्यायुषि शरीरे चिकीर्षसि ?। कथमिदं ते शक्यं नाम ?।

" अयि कियदतः परमखिलमायुर्मे ?। न दूरेऽधुना मेऽवसानम्। अनुभूतं मयाऽभीष्टमन्त्यदर्शनसुखं दर्शनीयानाम्। केवलमुटजस्थितानामेतासां देवतानामेतयोस्ते चरणयोश्च दर्शनमासीदवशिष्टम्। तदप्यधुना पूर्णतां गतमेव। एषाऽहमधुना प्रस्थिता प्राप्तये मोक्षस्य। कालवृष्टिसंवर्धितैः पयोभिर्निर्वाप्य वाहिताः पितृवनस्थिताश्चिता अखिलाः पुरोवर्तिन्याऽनया नद्या। भवतु। न कोऽपि विशेषः पयःपावकयोः। तुल्यप्रभावावेतावुभावपीश्वरगृहवर्तिनौ महाभूतावेव।

यस्य कस्याप्यधीनतां गतां मामसंशयं स प्रापयिष्यति समीपमीश्वरस्य। तद् यामि। पश्चिमोऽयं पदयोस्ते प्रणामो मे"।

इत्युक्त्वा सकृत् नन्दायाः पादौ स्पृष्ट्वा शरशलाकेव धनुर्मुक्ता सरभसं निर्गत्य नदीतीरमुपगता नीला नीरनिधिकल्लोलमालिकाविडम्बिषु नदीनीरेषु प्रक्षिप्यात्मानं न चिरान्नेत्रयोर्जनानामविषयतामयासीत्।

**इत्येकविंशः परिच्छेदः।**

**समाप्तोऽयं ग्रन्थः।**

# -विज्ञप्तिः-

ये केचिदत्र लघुचित्ततया विमूढा
निन्दन्ति मत्सरयुता अयथातथं नः।
तान् मानवाधमगुणोपहतस्वभावान्
प्रत्युत्तरं किमपि नैव वयं प्रकुर्मः ॥१॥

नित्यं स्वोदरपूरणैकमनसो येऽस्मादृशाः प्राकृता
आयुर्यैरतिवाहितं बहुकृतैरध्याप्य "मम्लुर्जगुः"।
नूत्ना याननुधावति प्रतिदिनं छायेव चिन्ताततिस्तेषां
लेखनमप्रमादरुचिरं स्वप्नेऽप्यपेक्ष्येत कैः? ॥२॥

अतः —

अज्ञानादलसादुपेक्षणवशात् प्राचुर्यतः कर्मणां
सर्वत्रात्र लसन्ति दोषनिचयाः सेवाविधौ स्वीकृते।
प्रज्ञास्तान् यदि पङ्क्तिशः प्रकटितान् कुर्युः पुनर्मुद्रणे
तद्दूरीकरणे यतेमहि ततो मोदात् कृतज्ञा वयम् ॥३॥

— शिवम् —

# – शुद्धपत्रम् –

## प्रथमः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १५ | मनिपिषदर्शनम् | मनिमिषदर्शनम् |
| ३ | ५ | परिचित | परिचिता |
| ३ | ७ | केन्याप्यु | केनाप्यु– |
| ४ | १ | दानदाने | ज्ञानदाने |
| ४ | १६ | त्वत्तोऽपिप्रच्छादनम् | त्वत्तोऽपि प्रच्छादनम् |
| ६ | ४ | कश्चमे | कश्च मे |

## द्वितीयः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | ३ | श्चैतैद् | श्चैतद् |
| १० | ३ | दत्त | दत्त– |
| १० | २१ | स्थापन्त्यस्य | स्थापयन्त्यस्य |
| ११ | ९ | प्रारभन्त | प्रारभत |
| १२ | १८ | सविशेषंविभूषिता | साविशेषं विभूषिता |
| १३ | १८ | दधानामुहुः | दधाना मुहुः |
| १५ | ९ | खेदितेन | खेदयित्वा |
| १६ | २४ | मन्त्रायितुम् | मन्त्रायितुम् |
| १७ | ६ | मनुतीते | मनुनीते |
| १९ | ९ | खेद्दयितव्यः | खेदयितव्यः |
| १९ | १० | पुरागंत | पुरोगतं |
| १९ | १६ | प्राथो | प्रायो |
| २० | ७ | वीक्ष्यमानवं | वीक्ष्य मानवं |

## तृतीयः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१ | १२ | समुद्घटितानने | समुद्घाटितानने |
| २२ | ११ | मुहूर्तीदेन | मुहूर्तदिने |
| २३ | १३ | हृदय | हृदये |
| २४ | १२ | सदैव | सहैव |
| २६ | ११ | माचस्ताऽपि | माचरताऽपि |
| २६ | २२ | स्यदुचिता | स्यादुचिता |
| ३० | १७ | एवस्वार्थाय | एव स्वार्थाय |
| ३२ | ६ | मृणालिनी मुख | मृणालिनीमुख |
| ३२ | २३ | हृदय | हृदयम् |
| ३३ | १६ | कर्हिचिद अल्पीयसी | कर्हिचिद् अल्पीयसीं |
| ३७ | १० | बश्चिराः | बधिराः |
| ३९ | १ | स्वीकृताभिक्षु | स्वीकृतभिक्षु |
| ४० | ३ | सनिरगच्छत् | स निरगच्छत् |
| ४४ | ६ | समर्प्यन्त | समार्प्यन्त |
| ४४ | ७ | समर्च्यत | समार्च्यत |
| ४५ | ७ | व्याराजतैकं | व्यराजतैकं |
| ४८ | १९ | पाणि; | पाणिः |
| ५२ | २२ | म नो | मनो |
| ६१ | २१ | यूथं | यूयं |
| ६८ | १४ | काम | कामं |

## नवमः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७९ | १ | इत्याभाष | इत्याभाष्य |
| ८१ | ५ | तवान्मां | तावन्मां |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८१ | ७ | प्रदता | प्रदत्ता |
| ८१ | ९ | हृदयम् | हृदयम् |
| ८४ | १० | मोक्षदानोधतः | मोक्षदानोद्यतः |
| ८४ | २४ | भवतो | भवतो |
| ८६ | १२ | दुबलं | दुर्बलं |
| ८६ | २३ | जिहव्या | जिह्वया |
| ८६ | २४ | तर्षयामि | तर्पयामि |
| ८७ | १३ | यन्मयोवतं | यन्मयोक्तं |
| ८८ | ४ | करिष्यासि | करिष्यसि |
| ८८ | १३ | वत्से | वत्स |
| ८८ | १३ | समाद्वयेयम् | समाह्वयेयम् |
| ८८ | २३ | स्वीरोषि | स्वीकरोषि |
| ८९ | १५ | मश्लिष्या | माश्लिष्या |
| ८९ | १८ | रोक्षन | रोदन |
| ८९ | १९ | प्रकृतैः | प्रकृतेः |
| ९० | ४ | इत्युकत्वा | इत्युक्त्वा |

## दशमः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९१ | ७ | अश्लिष्य | आश्लिष्य |
| ९१ | ८ | स्वाललिप्सया | स्वापलिप्सया |
| ९१ | १८ | प्राभवेनाम् | प्राभवताम् |
| ९१ | १९ | हृद्यता | हृदयता |
| ९३ | २ | नयेयमयं | नयेयमहं |
| ९३ | २ | स्वापात्य | स्वापाय |
| ९३ | १३ | मेतः | मतः |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९३ | १५ | निरोद्धं | निरोद्धुं |
| ९४ | २४ | मुल्लङ्घयेमम् | मुल्लङ्घयेयम् |
| ९५ | ५ | तस्थाः | तस्याः |
| ९६ | ९ | दीपाक्तिकोप | दीपान्तिकोप |
| ९६ | १५ | पूर्वेऽप्येप | पूर्वोऽप्येष |
| १११ | १ | मेववसित | मेवावसित |
| ११४ | ११ | कर | कट |
| ११५ | २ | कर | कट |
| १२० | १८ | नालुकूल | नानुकूला |
| १२३ | | निह्नतो | निहुतो |

## त्रयोदशः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२८ | २२ | संप्रान्त | संप्रान्त |
| १२९ | २२ | स्त्रीभावे | स्त्रीभावे |
| १३४ | २५ | गमनेन | गमनेना— |
| १३६ | २३ | न्तिरो भूतानि | स्तिरोभूतानि |

## चतुर्दशः परिच्छेदः

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४० | ११ | शय्यायधि | शय्यामधि |
| १४२ | १४ | स्वीक्तितो | स्विकृतो |
| १४३ | ३ | क्रान्किकरणाय | क्रान्तिकरणाय |
| १४४ | १४ | वरमति | वरमिति |
| १४४ | १४ | मीयः | मायः |
| १४५ | ५ | दिदृक्षत्यार्य | दिदृक्षतयार्य |
| १५३ | ११ | पथ | पथां |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५९ | २ | शैवः वो | शैवो |
| १६३ | | पशुरेव । गण्यते | पशुरेव गण्यते |
| १६४ | १ | परमाथ साधने | परमार्थसाधने |
| १६५ | ४ | तस्युः | तस्थुः |
| | | – सप्तदशः परिच्छेदः – | |
| १६९ | १४ | प्रकट्टित | प्रकटित |
| १७० | १८ | दभीष्ठ | दभीष्ट |
| १७२ | २२ | दहेत् | देहत् |
| १७५ | ३ | हवादश्यत | इवादश्यत |
| १७८ | १ | सेवितो | सेविनो |
| १७८ | ५ | वश्य कमेव | वश्यकमेव |
| १७८ | ८ | भवताम् | भवतः |
| १८३ | ४ | विमलमासिं | विमलमसिं |
| १८३ | ७ | तद्व्यापार | तद्व्यापार |
| १८४ | १३ | शक्यऽपि | शक्येऽपि |
| १८४ | ८ | पाणी | पाणिं |
| १८४ | २२ | इत्यदिभिः | इत्यादिभिः |
| १८४ | २४ | यामयद्व | यामद्वय |
| १८५ | ६ | मंशतः । समीप | मंशतः समीप |
| १८५ | ११ | स्वीकृत | स्वीकृत– |
| १८५ | १७ | आशीबला | आशीर्बलं |
| १८५ | १८ | चैतस्यामः | चैतस्या |
| १८५ | २१ | मात्रभिपतेत | मामभिपतेत् |
| १८५ | २१ | भवन्ते | भवताम् |

| पृष्ठम् | पङ्क्ति | अशुद्धम् | शुद्धम |
|---|---|---|---|
| १८५ | २५ | स्तधमु | स्तदयमु |
| १८६ | २ | बाले | बालो |
| १८७ | १५ | कश्चिद्द्धंसः | कश्चिद्धंसः |
| १८८ | १ | स्वहथिमु | स्वहर्म्यमु |
| १८८ | ४ | हतो | इतो |
| १८८ | ६ | कदाचिद | कदाचिद् |
| १८८ | २२ | तदानयन | तदानन |
| १८९ | १ | मात्मीया | मात्मीयां |
| १८९ | १२ | पर्याकुलिनचेन्त | पर्याकुलितचेता |
| १८९ | १३ | पथःपूर | पयःपूर |
| १८९ | १८ | हस्तममगतः | हस्तमुपगतः |
| १८९ | २५ | महिलाग्रति | महिलाप्रति |
| १९१ | १ | मध्त्रम | मह्यम् |
| १९१ | ३ | कथथित्वा | कथयित्वा |
| १९२ | १ | विभाग | विभाग |
| १९२ | २ | यमात्य | त्यमात्य |
| १९३ | २२ | यदयममत्य | यदयममात्य |
| १९४ | ११ | यानाति | यानति |
| १९४ | २३ | अत्मात्यराज | अमात्यराज |
| १९६ | २० | मैनंविधेन | नैवंविधेन |
| १९८ | २ | परिरक्षता | परिरक्ष्यता |
| २०३ | ११ | श्रत्वैम | श्रुत्वैम |
| २०४ | ४ | शृणु | शृणु |
| २०६ | १ | संपत्स्येते | संपत्स्यत |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१० | १५ | व्यापृतेषु | व्यापृतेषु सर्वेषु |
| २११ | १२ | मन्येत | मन्यते |
| २१२ | ५ | नभुवः | न भुवः |
| २१२ | २२ | वेलायामिहो | वेलायामिहो |
| २१२ | २३ | प्रययितुम् | प्रयतितुम् |
| २१३ | ७ | मृणामालिनी | मृणालिनी |
| २१७ | १५ | मामेयं | मा मेयं |
| २१८ | ६ | असिरेमम | असिरेव मम |
| २१८ | १८ | अपरिचिकीर्षुः | अ रचिकीर्षुः |
| २१९ | ६ | ज्वलन्त | ज्वलन्तं |
| २१९ | १८ | साध्यस | साध्वस |
| २२१ | ९ | निरतास्त | निरतास्ते |
| २२१ | १३ | शमधनवुभा | शमधनावुभा |
| २२७ | १ | समप्य | समर्प्य |

—+—